



श्रीगणेशायनमः

श्रीगुरुभ्योनमः

# श्रीशिवरहस्याख्यः महेतिहासः

## भवाख्यः द्वितीयांशः

---

### स्कन्दवाक्यन्नाम प्रथमोऽध्यायः

अगजाननपाथोजविकासनदिवाकरम् ।
विघ्नाद्रिकुलिशं श्रीमद्गणेशं तं नमाम्यहम् ॥ १ ॥

सूतः—

पुनःप्रणम्य मुनयो जैगीषव्यो महामुनिः। स भक्त्या तारकारातिं पुरारातिकथाश्शुभाः
पप्रच्छ विनयोपेतस्तुच्छीकृतजगत्त्रयः । स्वच्छाच्छमानसोत्फुल्लप्रहृष्टवदनाम्बुजः॥ ३
धृतत्रिपुण्ड्रभूत्यैव स वाह्यधवलान्तरः । रुद्राक्षामलकोटीरश्शाम्भवाग्रेसरस्तदा ॥ ४ ॥
गणेषु देवसङ्घेषु मुनिव्रातेषु सत्तमाः । पञ्चास्यहृदयानन्दं षडास्यं प्रेक्ष्य भक्तितः ॥
प्राह शूरारिमाशास्यध्यानपूतहृदन्तरः ॥

जैगीषव्यः—

सर्वज्ञ हृदयानन्द गौरीचुम्बितमूर्धज । तारकान्तक षड्वक्त्र तारिणे भक्तकारिणे॥६॥

---

१. स्ववाह्य इति पाठः ।

सर्वज्ञाननिधे तुभ्यं नमस्सर्वज्ञमूर्तये । सर्वधाजित्कुमाराय कुमाराय महात्मने ॥ ७ ॥
त्वत्षडाननपाथोजनिष्यन्दामृतसप्रभाः। कथास्सुधासमधुरिमाश्शम्भोश्शाम्भवएवताः
शृण्वतो मे मनस्तृप्तमतीव शिवनन्दन । गणेश्वराश्च देवाश्च मुनयोऽपि विशेषतः ॥९॥
त्रिणेत्रसुचरित्राणां पात्रं वयमतन्द्रिताः। किं त्वयाश्रावि देव्याश्च वदनाम्बुजनिस्सृताः
अनर्गलामृतझरीभरसारोपमाःकथाः। देव्यै देवेन कथिता रहस्या रहसि प्रभो॥११॥
पुण्ये शिवरहस्येऽत्र गोप्याद्गोप्यतराश्रयाः। तदेवाख्याहि षड्वक्त्र पञ्चवक्त्राद्यथाश्रुताः
ता मम प्रीतये शम्भोराज्ञया वद षण्मुख। त्वत्समो नरहस्यज्ञो गौरीहृदयनन्दन॥१३
धूर्जटिप्रेमसदनमयमूर्तिकृपास्पद ॥ १४ ॥

सूतः—

तद्वागमृतधाराभिस्सम्प्लावितहृदन्तरः । गुहाहितं महाशैवरत्नसम्पुटमुत्तमम् ॥ १५ ॥
उद्घाट्य दर्शयाञ्चक्रे मुनये भावितात्मने ॥ १६ ॥

स्कन्दः—

जानामि शश्वद्गणनाथपादं प्रफुल्लरक्ताम्बुजपङ्कजोपमम् ।
विघ्नेभसङ्घोत्तममौलिभेदने मृगेन्द्रहस्तोत्थनखप्रभं मुने ॥ १७ ॥
त्वादृक्षा मुनयो न सन्ति भुवने त्र्यक्षाङ्घ्रिपद्मार्चकाः
पूताः पूततरा भगाक्षिहरणापारार्थसारादराः ।
धीरोदारकथारसेषु सरसास्सारस्यहंसा इव
श्रीविश्वेश्वरभक्तिपुण्यसुरसामोदैकभारान्तराः ॥ १८ ॥
किं वक्तव्यमतोऽप्युमारमणतो नान्यो हि विश्वेश्वरो
विश्वस्तेषु च भावुकेषु भगवानाधिव्यथां संहरेत् ।
व्यर्थायासकरैरपारविविधैः किं धर्मजालैर्मुने
श्रोतव्यो हि सदाशिवश्शिवतरो भक्तैकमोक्षप्रदः ॥ १९ ॥

---

१. सूनवे इति पाठः । २. स्वरूपजिदिति पाठः ।
३. त्वमिति पाठः । ४. मनोऽतृप्तिरमीषामिति पाठः ।
५. भारांकिताः इति भारान्तकाः इति च पाठः ।

श्रीचन्द्रचूडचरणार्चनजातपुण्यैस्तुङ्गैरतुङ्गविभवा अपि ये मनुष्याः ।
रुद्राक्षभस्मललिताङ्गललाटशोभास्ते वै शिवाश्रयकथासु च दीक्षिता हि॥२०
यथा चाक्षिचक्षुश्श्रवापारभूषाविशेषेण गाधातितुष्टा विशिष्टा
सुदोषाकरासारमौलिप्रकाशेन कामाङ्गवामाङ्गशोभाशतेन ॥ २१ ॥
तदेवाद्यहृद्यं सुपद्यं सुगद्यं वदाम्यद्य वेदान्तवेद्यं महार्हम् ।
समीहेऽहमीशानतोषप्रदेचास्तदोषे प्रदोषे विशेषाघनाशे ॥ २२ ॥
सुदोषाकराकारमौलीशलिङ्गार्चके प्राप्तपुण्ये सुभक्ते विरक्ते ।
सुमुक्त्यै कथा सा रसास्फारहीराः कथाश्चाकथिष्ठाः कथञ्चित्तदानीम्॥२३॥
शिवायै शिवेनाद्य तुष्टेन पुष्ट्यै प्रकृष्टोरुपुण्यैकलभ्याः पवित्राः ।
त्रिणेत्रप्रियाः प्राज्यराज्याभिरामाः प्रमोदेऽपिमान्या दरिद्राद्दरेद्राः ॥२४॥
शिवे कष्टपुष्टे भवेऽपि प्रकृष्टास्तुराषाट्पदारण्यतोत्कृष्टभागाः ।
विनष्टाघसङ्घा जनिष्टे कनिष्टे प्रथिष्टे मंदिष्टे वरिष्टे विशिष्टे ॥ २५ ॥
शिवे तुष्टिदात्र्यः कथा मे शृणु त्वं वरङ्कोऽपि रङ्कोऽपि सङ्कोचितान्तः ।
न कोऽपीश्वरे भक्तिभावैर्युतस्स्यात्स एवाधुना स्वर्धुनीधन्यमौलेः ॥ २६ ॥
पदाम्भोजरक्तो विरक्तो मुनिश्च विनिर्जित्य कामादिषड्वर्गमुग्रम् ।
त्वमुग्रोऽप्यथाग्रेसरश्चोग्रभक्तः ॥ २७ ॥
लभेदेवभक्तिं विरक्तिञ्च मुक्तिं तथान्ते गणत्वं कथायां रतश्चेत् ।
शिवानुग्रहादेव ते भक्तिभावो न कस्यापि लोकेऽनुलोके कुतश्चित् ॥२८॥
मुनीन्द्रे गणेन्द्रे सुरेन्द्रे भवान्वै ललामोऽसि भक्त्या ममैवाद्य तुल्यः ।
प्रशस्यं रहस्यं यतश्शैवसारप्रदाने मनो मेऽद्य ईष्टे मुनीन्द्र ॥ २९ ॥
तवैवाद्य हृष्टं प्रकृष्टं प्रथिष्टं ममापीशभक्त्या कृपातोऽष्टमूर्तेः ॥ ३० ॥
श्रीशूलपाणिचरणार्चनजातपुण्यैर्यूयं सदा सुरगणा गणपुङ्गवाश्च ।
एते द्विजाः परमकारुणिकस्य शम्भोः पादप्रवीणमनसोऽप्यनसूयवश्च ॥३१॥

---

१. कलितांगललाम इति पाठः ।
२. महार्थमिति पाठः ।
३. भावाः इति पाठः ।
४. महिष्टे इति पाठः ।

निपातितकृकाटिके भगवदास्यपङ्केरुहे
चपेटवरघर्षणैर्विगतदन्तसङ्घोऽर्यमा ।
सुसप्तवरजिह्वको विगतजिह्वभागाग्रको
विनासिकवरामरीकवरवाणिकञ्जोद्भवा ॥ ३२ ॥
क्षयद्वीरपादार्चनाद्वीरभद्रो महारौद्ररौद्रैर्वृतोऽप्युग्रवेगैः ।
अनुग्रोऽधुना शम्भुवार्तारसज्ञश्चकास्तीशपादाम्बुजध्यानलग्नाः ॥ ३३ ॥
श्रीशैलादिरनुद्धतोऽयमधुना यश्चोद्धतो बालकं
लीलाक्लृप्तसपर्यया पुरभिदो लिङ्गे च तुङ्गे पुरा ।
उत्थाय प्रकटोरुघातचरणप्रान्तेन शम्भोस्तदा
यः कालं विजिगाय हुङ्कृतिपरस्सोऽयं कथायां रतः ॥ ३४ ॥
विहङ्गमातङ्गकुरङ्गवाहास्तुरङ्गमोत्तुङ्गपतङ्गसोमाः ।
घनाङ्गवाहस्य चरित्रसारकथारसे तर्षतरोरुहर्षाः ॥ ३५ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे स्कन्दवाक्यन्नाम
प्रथमोऽध्यायः ॥ १ ॥

---

## देवीतपोवर्णनं नाम द्वितीयोऽध्यायः.

स्कन्दः—

श्रीकैलासे पुरा विप्र जैगीषव्य महामते । तपश्चचार सा देवी नियतं नियताशना॥१
अकामापि शिवा तत्र कश्चित्कामं हृदि स्मरत् । कामाङ्गनाशनपदं हृदि ध्यायत्सपर्यया
वर्षायुतं तपश्चक्रे कैलासे परमेश्वरी । तपस्तताप परमं यदसाध्यं तपस्विभिः ॥ ३ ॥
क्व सा मृणालतन्वङ्गी क्व चोग्रं तादृशं तपः । कठोरवर्ष्मसंसाध्यं महोत्थं चेतसो धृतिः॥
धाराधारासु वर्षासु महावातवतीष्वलम् । शिलासु सावकाशासु सा वह्नीरनयन्निशाः॥
निशापतिकरासारपानपीनहृदन्तरा । श्रुत्वा सिंहरवं घोरं दृष्ट्वा विद्युच्चमत्कृतीः ॥६॥
आसारशीकरैः क्लिन्ना न चकम्पे मनाक्च सा । तटित्स्फुरन्ती त्वसकृत्तमिस्रासु तपोवने

यातायातं करोतीव द्रष्टुं तत्तपसस्स्थितिम् । तपर्तुरेव साक्षात्सा कौमारी कौतुकात्किल
पञ्चाग्नीन्परिधायात्र तपस्यन्ती तपोवने । न मनागपि हेमन्ते ज्वालामालाविवर्जिता ॥
कुशाग्रतोयमपि सा स्वीचक्रे तापतापिता । ग्रीष्मे प्रचण्डकिरणैश्चण्डभानोः प्रचण्डिता
रोमाञ्चकञ्चुकवती वेपमानतनुच्छदा। पर्यक्षिपत्क्षमाक्षामा सरसी हिमनीव सा॥ ११॥
निशीथिनीषु शिशिरे सारसक्रौञ्चसद्रवैः। पतन्ती सरसापारमुग्रता धृतितर्पिता॥ १२॥
मनस्विनामपि मनोराज्यं संसृजती मधौ । तदोष्ठपल्लवाद्रागो जह्रे माकन्दपल्लवैः॥ १३
वसन्ते सञ्चरन्ती सा वने वालाचलं मनः । चक्रे तैपस्यपि श्रुत्वा कोकिलाकाकलीरवम्
वन्धुजीवेऽधररुचिं कलहंसे कलागतीः । निक्षेपमिव सा क्षिप्त्वा शरद्यासीत्तपोरता॥
शाणेन मणिवल्लीढा कृशाप्याप्यनर्घ्यताम्।तथापि तपसा क्षामा दिदीपेऽग्निशिखा इव
सदानन्दघना शम्भुपादाब्जोन्निद्रमानसा । निद्रातन्द्रादिरहिता ह्यार्द्रीकृतहृदन्तरा ॥
शिवध्यानसुधाधारानिष्यन्दामृतशीकरैः । कुर्वन्त्यत्तं स्वमात्मानं सुविस्तृतमथाकरोत्
परिमुच्याङ्गरागादिभूषणापि लसत्तनुः । अपर्णापि सदा पर्णवाससा सर्वदाशिवा॥ १९
वलक्षभूत्या विलसद्गालाच्छछविसोमजित्।प्रचण्डसूर्यकिरणावृतात्यच्छशरद्घना॥ २०॥
त्रिपुण्ड्रमण्डितोत्फुल्लसुरक्तवनजानना । तिलकोद्भासिवक्त्रश्रीविराजितजगत्त्रया ॥
महारत्नमणिव्रातलसत्सरवलम्बिना । कण्ठेन धृतरुद्राक्षमालालङ्कृतविग्रहा ॥ २२ ॥
ऐणेयत्वसिकोद्भासिभूतलाधारसत्प्रभा । भस्मासनस्था वरदा भर्त्सयन्त्येनसां गणम् ॥
विद्युल्लतेव घनगा कैलासनगमूर्धगा । स्वर्धुनीं पुण्यसलिलां पावयन्तीव गाहनैः॥ २४॥
स्वसंहननसौन्दर्यरसप्लावितदिक्ततिः। मालूरवनमध्यस्था तन्मूलस्थण्डिले रता॥ २५॥
रुद्राद्यत्तिरसापारतत्पदार्थविशोधिनी । पञ्चास्यध्याननिर्धूतरभसा महसा तता ॥ २६॥
पञ्चाक्षरादरा तस्थावेकपादेन सा शिवा । स्थाणुवन्निश्चलतरा स्थाणुन्यस्तहृदन्तरा॥
प्रपञ्चपञ्चीकरणस्थाणुवन्नगजा तदा । पन्नगाशनवाहाद्यैः पद्मजाद्यैश्च विस्मितैः॥ २८॥
तपोमूर्तिरियं देवी ह्यमूर्तिरपि शङ्करी । अलक्ष्यलक्षीकरणे त्र्यक्षमक्षविदूरगम् ॥ २९॥
नासाकोटिं कटाक्षेण लक्षयन्ती परा शिवा । अपक्ष्मनेत्रावरणकृताम्बुजविलोचना ॥

---

१. कैतवात्किलेति पाठः । २. क्षपाक्षामेति पाठः ।
३. तपस्विभिरिति पाठः । ४. संसृतेति पाठः ।

निद्रादरिद्रनयना शिवध्यानपरायणा । तत्प्रकाशमहावर्ष्मभाभिर्भात्येव शैलराट् ॥३१
निनाय यामिनीनाथध्यानेनैवाथ यामिनीः । तामेवं तपसां राशिमाशादूरहृदन्तरा ॥
चित्कलानन्दकलिका तपोरञ्जितवेषभूः । तां मृगेन्द्रा अपि वने सेवन्तिपरमादरैः ॥
परितः परिसेवन्ति राजानं जनता इव । स्वपिञ्छैश्छादयन्त्येनां मयूरास्सोमशेखराम्
वीजयन्त्येव हंसास्तां स्वकपक्षोत्थवायुभिः । चमराश्चमरीपुच्छैर्दोधूयन्ति सदा शिवाम्
मृगाः पश्यन्त्यनिमिषैर्लोचनैर्हरिणेक्षणाम् । वायुरायासितां देवीं मत्वा च परिसेवते॥
कदम्बबन्धुरसुमगन्धबन्धैकशीतलः । कैलासमौलिसञ्चारमेघवृन्दा इवोत्तमाः॥३७॥
वसन्तसूर्यकिरणसन्तप्तां जगदम्बिकाम् । सिन्धुरास्सुन्दरतरास्स्वशुण्डापुष्करोत्थितैः
जलासारैस्सेचयन्तितत्पगात्रांमहेश्वरीम् । स्वच्छाच्छधामसुभगस्तारानाथोऽपिस्वैःकरैः
पाययत्यनिशं देवी गात्रं पूयेत मामिति । तिलकास्तिलकायन्ते तदम्बायास्तपोवनम्॥
रक्ताशोकभरा देवीशोकवृन्दं हरन्ति ते । प्रफुल्लशेखरापारपुन्नागा नगमूर्धनि ॥४१॥
पुन्नागा इव शोभन्ते चन्दनानन्दिताननाः । सर्जा जर्झरपत्रैश्चाप्यर्जुनास्तर्जयन्त्यपि॥
देव्यास्तपोविघ्नकरान्स्वकरैर्वारितातपाः । तालास्स्वपत्रवायूत्थचलनैर्घर्घरारवाः॥४३
कुन्दवल्यो मुदं देव्यै दधुर्मन्दारगन्धिताः । वातयुक्तैर्मरन्दैश्च पूजयन्त्येव तां शिवाम्[1]
सालाः प्रालेयभूकन्यामालोकन्त इव स्थिताः । तमालास्स्तवकैरच्छपुष्पभारनताननैः
नमन्त इव तान्देवीं परितस्थुर्मुदा तदा । कदम्बा जगदम्बां तां पुष्पलोलम्बभासुराः
लम्बोदरप्रसूं देवीमालिङ्गन्त इव स्थिताः । दाडिमीकान्तिसर्वस्वं मयिदत्त्वेति हर्षिताः
इयं पद्मपलाशाक्षी इति ते न्याससत्पराः । लक्तकाः प्रपदे कान्तिर्देव्या न्यस्ता हि नो इति
धृत्वा तस्यै पुनर्दातुं प्रवृत्ता इव ते स्थिताः । बिम्बवल्यस्तया देव्या दत्ताधरसुराङ्ककाः
सेवन्ति च महादेवीं परितः प्रसृतास्तदा । पाटलास्स्वसुमापारगन्धमेदुरमूर्तयः॥५०॥
तन्नखोत्थामलारक्तकान्तिगर्भा इव स्थिताः । मालूरास्स्वसुमोद्भूतजितैणमदसौरभाः॥
स्वच्छदैश्छादयन्त्येव पत्रैस्स्वैश्छादयन्त्युमाम्।नीपा मापतिवद्देवीं सेवन्तिपरितोवृताः
लिकुचाःकुचसौन्दर्येतस्यानोविजिता इति । आनम्रफलशाखाग्रैर्विनम्रा इव तेस्थिताः
आम्रास्स्वसौरभदलद्दिशां स्तोमैर्महेश्वरीम् । देवीपाणितलाकारपल्लवालम्बिशेखराः ॥

१. पूजयन्तीति पाठः ।

देव्याःपिशङ्गितजटाभारशेखरवत्स्थिताः। चम्पकाश्चम्पकोद्दामकलिकाकारनासिकाम्
देवीं वृन्तविलूनैश्च पूजयन्ति सुमैस्स्वकैः। वकुला भूधरोत्तुङ्गकुलशेखरकन्यकाम् ॥
पवनैर्विगलत्पुष्पैरर्चामर्चन्ति शाखिना। शिरीषास्स्वसुमाधिक्यदिव्यकोमलविग्रहाम्
स्वपुष्पैश्छादयन्त्येनां कर्णिकाराश्च केसरैः। पूजयन्ति महादेवीं तथा कुरवका अपि
तिमिशानक्तमालाश्चस्वपुष्पैर्मालिकांददुः। जम्बूनिम्बाःकेतकाश्चपुष्पगुच्छैश्शिवाङ्गकम्
उत्फुल्लकुसुमासारपटवासप्रभां तदा। मुक्ताफलसमाकारैर्मधूकाविगलत्सुमैः ॥ ६० ॥
विकिरन्ति महादेव्या मूर्ध्नि धन्यास्स्वकैः करैः। फलजालप्रपतनपूजामिषभरैस्तदा॥
कुर्वन्ति तद्वनोद्देशे तिर्यश्चोऽपि सहायताम्। एवं परिचयात्तस्याः कैलासनगमूर्धगाः ॥
मृगाण्डजास्स्थावराश्च सेवन्ति परितश्शिवाम्। नगाग्रमौलिसङ्घेषु ते वनस्पतयोऽपि च
स्वजनुर्धन्यताप्राप्त्यै देव्यास्सेवापरायणाः। कोकिलाकाकलरवैश्श्रवणोद्दामसुन्दरैः॥
कलहंसालयः केकारवैरुत्तमवर्हिणः। सारसाः क्रौश्चनिवहा रुवन्ति मधुरध्वनिम्॥६५
भृङ्गास्तुङ्गरवाःपुष्पच्छदभ्रमणसुन्दराः। देवींस्तोष्यन्तिपरितस्स्ववाग्भिस्तेविनीतवत्

स्कन्दः—

इत्थं शैलवरे पुरा गिरिजया तप्तं तपः पावनं
त्र्यक्षाक्षोभ्यपदाम्बुजप्रवणया ध्यानैकधारारसैः।
वर्षाणामयुतं शिरीषकुसुमाकाराङ्गसौन्दर्यम-
प्युज्झित्वैव शिवैकनिष्ठहृदया किञ्चिद्दृदा सन्दधत् ॥ ६७ ॥
सर्वेषां तपसां फलोन्मुखमहासाम्राज्यदानक्षमा
दाक्षायण्यपि ध्यानभूतविषया देवं स्वचित्ते दधत्।
लोकानां प्रदिशत्यपारतपसा प्राप्यं फलं चेतसा
सा सर्वोत्तमदेवदेवजनिमप्राप्यार्चयत्केवलम् ॥ ६८ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे देवीतपोवर्णनं नाम
द्वितीयोऽध्यायः ॥ २ ॥

---

१. शाखिनः इति पाठः।

विप्रदेवीसंवादोनाम तृतीयोऽध्यायः.

स्कन्दः—

तपस्यन्त्यां तथाम्बायां सर्वेषां विस्मयावहम् । आश्चर्यकारिभिर्भूतैस्तथैवप्रमथेश्वरैः ॥
मुनीश्वरैर्देवसङ्घैर्विष्णुब्रह्मादिभिस्सुरैः । गन्धर्वैरुरगैस्सिद्धैश्चारणैर्यक्षपूरुषैः ॥ २ ॥
काले बहुतिथे याते समभ्यागाद्यदृच्छया । शिवो हि विप्ररूपेण तत्तपस्सिद्धिहेतवे ॥
वयसा शतकेनापि कृशोधमनिसंमितः । पर्णच्छदावृततनुर्धृतयष्टिकमण्डलुः ॥ ४ ॥
सुराभिर्दृश्यमानाभिस्स्नायुचर्मास्थिसंयुतः । शितश्मश्रुजटाकूर्चब्रह्मसूत्रोपशोभितः ॥५
पर्वताग्रे चरन्मन्दं स्खलत्पादः पतन्नपि । मन्दं मन्दं समायाति मन्दमारुतवद्द्विजः ॥
कैलासोपवने तत्र ददर्शायतलोचनाम् । मालूरवृक्षसङ्घोत्थछायायां स्थण्डिलोपरि ॥
भस्मपर्यङ्कशयितां विद्युत्कोटिशतप्रभाम् । सौन्दर्यधारासर्वस्वविग्रहामिव संस्थिताम् ॥
उत्फुल्लारक्तकमलदलप्रान्तोरुलोचनाम् । चांपेयकलिकाभोद्यन्नासाशोभितमौक्तिकाम्
सुवृत्तहल्लकलसच्छ्रवणद्वयशोभिताम् । कञ्जदर्पतिरस्कारिकण्ठमण्डलशोभिताम् ॥१०॥
घनमण्डलसङ्काशकचभारविराजिताम् । पिशङ्गितजटालीकवेणीजालसुमौलिकाम् ॥
अष्टमीचन्द्रसङ्काशभूलताशोभिताननाम् । पक्ष्मभिर्विजितासारनिविडावृतलोचनाम् ॥
उद्यच्छशाङ्कमध्यस्थकलङ्करहिताननाम् । पीनवृत्तमणिप्रोद्यत्कलशाभकुचद्वयाम् ॥१३
त्रिपुण्ड्ररेखाभस्माच्छतिलकद्योतिताननाम् । त्रिवलीवलिगम्भीरसुन्दरोदरसंवृताम् ॥
स्तनभारनतप्रायकटिमण्डलशोभिताम् । रम्भास्तम्भसुवृत्तोरुद्वयकाण्डमहापदाम् ॥१५॥
कमठीपृष्ठसङ्काशप्रपदालक्तसत्पदाम् । जानुगुल्फस्फिगाकारतत्तद्वृत्ताखिलाकृतिम् ॥
मणिस्तम्भोपमाकारबाहुद्वयनखाङ्गुलिम् । प्रवाललक्तकासक्तकुरुविन्दाभसन्नखाम् ॥
पदद्वयालक्तरक्तकैलासं रक्तवर्णकाम्[1] । नखदीधितिजारक्तप्रभायितदिगन्तराम् ॥१८
अपर्णा पर्णजालोत्थवाससा संवृतां तदा । सुपाण्डरमहाभस्मपरिशोभिकलेवराम् ॥
भूषावलिविहीनापि शुशुभे साक्षमालया । स्थिरां तपोमूर्तिमिव स दूरात्समुदैक्षत ॥
देव्यापि दृष्टो विप्रेन्द्रश्शैवो भस्मविभूषितः । त्रिपुण्ड्रावृतसत्फालो रुद्राक्षाङ्गदकङ्कणः
वदन्हरहरेशेति धृतयष्टिस्स्खलन्पथि । तादृक्षन्तापसं दृष्ट्वा तपोराशिमिवस्थितम् ॥२२

१. रक्तवर्णकृत् इति पाठः ।

मूर्तिमन्तं हव्यवाहमिवागतमुमा तदा । एह्येहीत्यभ्यवोचत्तं तापसं वीतकल्मषम् ॥२३
स गौरीसारवाक्येन जातहर्षस्तदन्तिकम् । मन्दं मन्दं ययौ विप्रस्तद्देव्यास्तपसो वनम्
देव्या दत्तवृसीमध्यमध्यतिष्ठत्कृताञ्जलिः । उवाचाम्बाननं वीक्ष्य सगद्गदमहो तदा ॥

विप्रः—

किञ्चिन्न जानामि शिवे वक्तुं श्रोतुं किलामले । जरया परिपूर्णाङ्गश्शतवर्षायुरस्मि हिं
अस्मिन्कैलासभूभागे सञ्चराम्यहमेककः । तत्र श्रुतं शिवगणैः कुरुतेऽम्बा तपो दृढम्
त्वद्दर्शनार्थं देवेशि मन्दं मन्दं समागतः । विस्मयेनाहमत्रागां त्वत्पादाम्बुरुहेक्षणः ॥
तवापि तपसा किं वा कार्यमम्भोरुहानने । सर्वेषां तपसां देवि त्वत्पादाब्जं तपः फलम्
प्रसूते ब्रह्मविष्णूनां मुनीनां भावितात्मनाम् । मुनिभिश्च गणैर्देवैस्तपस्तप्तं शिवे पुरा॥
तत्पदाम्बुजसेवार्थं शिवज्ञानार्थमम्बिके । त्वत्प्रसादेन ते सर्वे जाता लोकेषु नायकाः॥
ब्रह्मा स्रष्टावने विष्णुस्संहृतौ रुद्र उत्तमः । कल्पितास्त्वद्दयापात्रास्त्वदपाङ्गावलोकनात्
किं तवाप्राप्यमस्तीह तपसा केवलेन हि । क्व ते तनुश्शिरीषोत्थकुसुमादपि मार्दवी ॥
तपः क्वनु महादेवि साहसं प्रतिभाति मे । क्व तवाङ्गैकसौन्दर्यं क्व वा भस्मविलेपनम् ॥
पाटीररसकर्पूरकस्तूरीवरचन्दनैः । लेपितं कुसुमामोदि मणिमाणिक्यभूषितम्॥३५॥
भूषणानां त्वदीयाङ्गं भूषणं किल शैलजे । शैलजातेति काठिन्यं हृदयं त्वनुवर्तते ॥
हय्यङ्गवीनसदृशं तवमानसमम्बिके । तदद्य कठिनं किं नु तपस्येव प्रवर्तते ॥ ३७ ॥
तव भर्ता महादेवस्साक्षाल्लोकैकनायकः । तेनैवानुमताचासि नोचेत्तव तपःक्रिया ॥
कारणं नैव जानामि त्वत्तपःकरणे शिवे । फलप्रदानोन्मुखी त्वं सर्वेषां तपसामपि ॥
यदि श्राव्यं वेदापर्णे न गुह्यं ते यतोऽम्बिके । वद गुह्यं कृपासारवीक्षणेन हृदा मुदा॥
तस्य तद्वचनं श्रुत्वा गौरी गिरिवरात्मजा । प्राह तं विनयान्नम्रं वृद्धं तापसमुत्तमम् ॥

श्रीगौर्युवाच—

कश्चित्कामंपुरस्कृत्यतपोनिष्ठास्म्यहंद्विज । नमेऽस्तिकिञ्चित्कर्तव्यंकारणंनान्यतोमम॥
अहमेवाखिलाराध्या सर्वेषां तपसां फलम् । प्रदातुं मोचितुं सर्वान्पशूनहमतन्द्रिता ॥
विश्वाधिको महादेवस्सर्वेषामधिनायकः । स मे भर्ता सखा माता बन्धुर्मम पिता शिवः॥

१. तदेति पाठः ।

तस्य शक्तिरहं साक्षान्मया मायी महेश्वरः। मयाकृतमिदं विश्वं लोकलोक्यैस्समावृतम्॥
मत्तेजसैव ससृजे यथापूर्वं विधिर्जगत्। मत्तेजसैव विष्णुश्च जगत्पात्यसुरार्दनः॥४६॥
मत्तेजसैव रुद्रोऽपि संहरत्येष वै जगत्। मत्तेजसैव देवेन्द्रस्त्रिविष्टपविनिष्ठितः॥ ४७॥
मरुतो मनवश्चैव सोमसूर्या ऋषीश्वराः। ताराजालमिदं सर्वं वायुरग्निर्यमोऽर्यमा॥
निऋतिर्वरुणश्चैव कुबेरो रुद्र एव च। दिक्पालाः प्रमथाधीशास्स्कन्दहेरम्बपूर्वकाः॥
सर्वे सुरासुरा दैत्या राजानः पृथिवीभुजः। नदीनदसमुद्राश्च गिरयोऽथ वनानि च॥
भूरादिसप्तलोकाश्च पातालान्यथ सप्त वै। सर्वं मद्वशगं विप्र चराचरमिदं जगत्॥ ५१॥
तस्येश्वरस्य चिच्छक्तिरहमेव सनातनी। तथापि लोकगुप्त्यर्थं किञ्चित्कामं हृदि स्मरम्॥
तस्येश्वरप्रसादार्थं चरामि परमं तपः। किञ्चित्पृच्छामि विप्रेन्द्र शाम्भवाग्रेसरो ह्यसि॥
तद्वदाद्यानुपूर्व्येण मा तेऽस्त्वद्य व्यतिक्रमः। तथ्यं प्रब्रूहि मातथ्यं तेन तुष्टास्मि शाम्भव
सत्यप्रियाहं विप्रर्षे मम कैलाससद्मनि। नैवाश्रमो मुनिगणो नो चात्र पवनोऽपि हि॥
चन्द्रसूर्यकराश्चापि न प्रसर्पन्तिभूधरे। विष्णुब्रह्मादयो देवाः कैलासस्यास्य दर्शने॥
वहुकालं तपस्यन्ति प्रसादार्थं हि शूलिनः। तवप्रवेशः कुत्राभूत्तन्मे वद मनोगतम्॥

सूतः—

तदा देव्या वचश्श्रुत्वा विप्रवेषधरो हरः। प्रोवाच प्रसभं देवीं परिवञ्चक ईश्वरः॥ ५८॥

विप्रः—

विप्रोऽहं भार्गवो देवि हिमाचलकृताश्रयः। तत्राहमवसं विप्रस्तपस्स्वाध्यायशीलवान्॥
वहुजन्मशतावर्तैस्सदालिङ्गार्चकस्य मे। न जहाति स्मृतिर्मातस्ततोऽहं प्रवदामि ते॥
प्रसादसुमुखो देवो मामभाषत चैकदा॥ ६१॥

ईश्वरः—

अस्मिन् जन्मशतान्ते त्वं विप्रः कैलासमौलिगः। तत्रैव भवतो जन्म तत्रैव त्वं जरां गतः
स्थास्यस्सुचिरकालीनः[1] कौतुकावह एव मे। नित्यस्सदैव जरया क्षुत्पिपासे न चान्यथा
स्मृतिर्जहाति न त्वां हि जराजीर्णेऽपि च त्वयि। इत्थं प्रसादसुमुखो मामाह परमेश्वरः॥
तस्माद्वस्येह[2] कैलासे प्रसादेन महेशितुः। तव प्रभावं विज्ञातुं मामाह परमेश्वरि॥ ६५॥

१. स्थास्यसेचिरकालीनः इति पाठः। २. तस्मादस्मीह इति पाठः।

स्कन्दः—

इति विप्रवचश्श्रुत्वा साश्चर्यं समभाषत। मौलिमान्दोलयन्देवी नासाग्रन्यस्ततर्जनी ॥

गौरी—

कदाचिन्मां रहस्येऽपि नोक्तवान्परमेश्वरः। विप्रोऽस्ति तापसो वृद्धो बहुवर्षायुरुत्तमः॥
मम लिङ्गार्चकस्साधुरस्मिन्कैलासपर्वते। इति सा विस्मयेनाह ततो विप्रोऽभ्युवाच ताम्

विप्रः—

त्वत्तः प्रियतरा भक्ता महादेवस्य शङ्करि। नैवाकथि शिवेन त्वं किञ्चिद्वक्ष्यामि ते हितम्
भक्तिप्रियो महादेवो भाववश्यो महेश्वरः। सर्वज्ञासि विशेषेण त्वयि वाच्यं न विद्यते॥
तथापि किञ्चिद्वक्ष्यामि जरसा च परिप्लुतः। कायक्लेशकरेणालं तपसा परमेश्वरि॥
किं कायक्लेशनिचयैर्धर्माभासनिभैश्शिवे। अर्थव्ययायासलभ्यैः पतनान्तैर्दुरासदैः॥
योगैर्यागैस्तीर्थयात्राव्रतकृच्छ्रादिसाधनैः। इष्टापूर्तैः कष्टधर्मैर्वर्णाश्रमनिबन्धनैः॥ ७३ ॥
[1]श्रमैकभारं नो सौख्यं चित्तशान्तिर्नचैव हि। अतिकल्मषचित्तानां संसारासारवर्तिनाम्॥
जडानामल्पसाराणां क्रमान्मुक्तिप्रदा हि ते। तस्मात्त्वया न संसेव्यो दारुणोऽयमवग्रहः
साक्षान्मुक्तिप्रदं धर्मं शिवलिङ्गार्चनं शिवे। तस्मिन् सम्पूजिते शम्भुर्नितरां परितुष्यति॥
अधिकारिविभेदेन धर्माभासाश्शिवेन हि। कल्पिताश्श्रीमहेशेन श्रौतस्मार्तपुराणकाः॥
विप्राणां श्रौतधर्मो हि कथितोऽस्ति स्मृतेरपि। क्षत्रियाणां विशांचापि पौराणश्शूद्र एवहि
तान्त्रिके [3]वैदिकश्चापिननियोज्योऽस्तिशङ्करि। कर्मवादमिदंश्रौतंयज्ञाध्ययनसत्क्रियाः
यज्ञैरिष्ट्वा महादेवं स्मार्तैरपि सदाशिवम्। शुद्धस्य कर्मभिर्देवि ततो भूयादुपासनम्॥
उपासनायां ये धर्मास्ताञ्छृणुत्वमिहाम्बिके। अग्निरित्यादिभिर्मन्त्रैर्विभूत्युद्धूलनं तथा॥
त्रियम्बकैश्च गिरिजे भस्मनाप्यवकुण्ठनम्। त्रियायुषैस्त्र्यम्बकैश्च त्रिपुण्ड्रपरिधारणम्॥
ततो रुद्रजपश्चैव पञ्चाक्षरजपस्तथा। रुद्राक्षधारणं देवि शिरोबाहुगलादिषु॥ ८३ ॥
त्रिपुण्ड्रस्य च यन्मन्त्रं तद्वै रुद्राक्षधारणे। महाभस्म महादेवस्संसारभयनाशकः॥ ८४ ॥
ततो लिङ्गार्चनं श्रेष्ठं बिल्वपत्रैर्महेश्वरि। एवं सततयुक्तस्य शिवध्याने भवेन्मतिः॥ ८५ ॥

---

१. शतैरिति पाठः। २. श्रमैकभारैरिति पाठः।
३. वैदिकैरिति पाठः।

सूर्यात्मनोमहेशस्याप्यमूर्तस्यापिशूलिनः। त्रिणेत्रंनीलकण्ठञ्चसाम्वंहृत्स्थंविचिन्तयेत्
ततोऽपि ध्यानतश्शम्भोर्नित्यानित्यविवेकतः। गुरुशुश्रूषया चैव वेदान्तार्थविचारतः॥
सर्वमात्ममयं भाति तस्यैवानुग्रहाच्छिवे। ब्रह्मैव ब्रह्मभवति नान्यदत्रास्ति किञ्चन॥
ज्ञानेन ज्ञेयमालोक्य ज्ञानं तत्र विवर्जयेत्। ज्ञानं ज्ञेयं तथा ध्याता ध्येयं ध्यानं तथैव हि॥
आत्मैवेदं किलेशानि ब्रह्मैवेदं हि नेतरत्। तदा विज्ञायते ज्ञानं शिवानुग्रहतः परम्॥९०॥

किं वक्तव्यमुमासहायचरणाम्भोजार्चनध्यानतो
नान्यल्लिङ्गसमर्चनार्जितमहापुण्याम्बुराशेः परम्।
सर्वं लभ्यतएव शम्भुभजनात्किं कार्यमन्येतरै-
र्धर्माभासपरम्पराभिरगजे भूयाच्छ्रमः केवलम्॥ ९१॥
यो देवं सुचिरं शिरोव्रतपरो लिङ्गे स्थिरे वाचरे
विल्वैः पूजयति त्रिकालनियतं तेनैव तप्तं तपः॥ ९२॥
किं धर्मजालैर्निखिलैश्च यागैर्योगैस्तथाष्टाङ्गयमाशनाद्यैः।
व्रतैश्च कृच्छ्रैरमृतैरुमापतिप्रियं न किञ्चिन्नियतेन गौरि॥ ९३॥
लिङ्गार्चनं विल्वदलैरपारैस्त्रिकालमीशार्चनतो विमुक्तिः।
लभेत देवस्य कृपाकटाक्षतो नान्यत्प्रियं तस्य त्रिशूलिनोऽम्बिके॥ ९४॥
इत्युक्त्वा स जगाम विप्रतिलकश्चादर्शनं पश्यतो
देव्यास्तत्र महेश्वरेण कथितं धर्मोत्तमं सा शिवा।
ध्यानेनाधिजगिष्टि देवमिति सा तध्यानहृष्टान्तरा-
नन्दाम्भोधिनिमग्नसारहृदया तञ्चाष्टमूर्तिं शिवा॥ ९५॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे विप्रदेवीसंवादो नाम
तृतीयोऽध्यायः॥ ३॥

---

१. ब्रह्मविद्ब्रह्मभवतीति पाठः।
२. ज्ञातेति पाठः।
३. जगीष्टेति पाठः।

अम्बिकेश्वरपूजनन्नाम चतुर्थोऽध्यायः.

जैगीषव्यः—

सा विप्रवचनंश्रुत्वा स्कन्द देवी गिरीन्द्रजा। किंश्चकार तदाशैले तत्समाचक्ष्वकौतुकम्
तदा स्कन्दो मुदावक्तुं गौर्याश्चरितमुत्तमम्। प्रचक्रमेगणेन्द्राणां मुनीनां नाकिनांतथा

स्कन्दः—

ध्यात्वा पुरारिमथ सा स्वहृत्पद्मे तथाऽम्बिका। तपोवनगता देवी तस्मिन् कैलासपर्वते॥
कोटिभिर्विहितानेकशिखरैरिन्दुसप्रभैः। प्रकाशधवलच्छायैराकाशमिव निर्मलैः ॥ ४ ॥
तत्रैकस्मिंश्च शिखरे रम्यतुङ्गघनावृते। राजतोत्तमसर्वस्वधारारसविजृम्भिते ॥ ५ ॥
स्वहृदा चिन्तयामास क्षणमेकमतन्द्रिता। महामाया महाशक्तिर्यया ततमिदं जगत् ॥
यया सृजति भूतानि देवदेवो महेश्वरः। सैव स्वहृदयध्यानैश्चिन्तयत्क्षणमात्रकम् ॥
तस्मिन्गिरिवरोत्तुङ्गशिखरे समदृश्यत। रम्यं मणितटं दिव्यं योजनायतमुत्तमम्॥ ८॥
मणिसोपानसंयुक्तं तीरवन्धविराजितम्। स्फाटिकोत्तमदिव्याम्बुपूरपूरितमुत्तमम् ॥
रत्नमत्स्यैः कर्कटैश्च रत्नकूर्मैस्समावृतम्। कुरुविन्दोत्तमलसत्सहस्रदलपङ्कजैः॥ १० ॥
विकसद्बन्धुरामोदपर्यन्तामलकेसरैः। मरुदुत्थैस्तत्परागरञ्जितैस्तीर्थवारिभिः॥ ११॥
मरालोदकसञ्चारिहरित्पत्राच्छकुक्कुटैः। सरसैस्सारसारावचक्रवाकयुगैर्वृतम् ॥ १२ ॥
तत्तीरे परितस्स्वच्छछायासञ्छन्नमौलिभिः। वनस्पतिवनैर्देव्या तत्र सीमा कृता मुदा॥
तत्प्रान्तरत्नगर्भोरुमण्टपावलिभासुरम्। ज्वलत्कुम्भोरुवलभीजालकच्छन्नताम्बरम् ॥
प्रफुल्लरत्नमन्दारै रत्नपङ्कजशोभितैः। तिलकैर्नक्तमालैश्च तमालोत्तमसालकैः ॥ १५ ॥
धवैर्नीपैश्च पनसैर्लिकुचैर्वकुलैरपि। अशोकैः कर्णिकारैश्च कुटजैश्च कुरण्टकैः॥ १६ ॥
तगरैरगरै राजद्राजवृक्षैश्शिरीषकैः। तक्कोलाङ्कोलपुन्नागनागार्जुनकशिंशुपैः ॥ १७॥
चन्दनैर्नन्दनाकारैर्नयनानन्दिसुन्दरैः। श्रीकरश्रीपरिवृतैश्श्रीवृक्षैः पाटलैरपि॥ १८॥
सन्तानैः पारिजातैश्च जम्बूजातिफलद्रुमैः। कोविदारैर्देवदारैर्विभीतकहरीतकैः॥१९॥
वटोरुपटलैश्चैव पूगनारैलसर्जकैः। कदलीदललोलैश्च फलपुष्पावनामिभिः ॥ २० ॥
लवङ्गैः कुशिकैः फुल्लकृष्णागरुमधूककैः। कुन्दवल्यो मल्लिवल्यो द्राक्षैलावल्लिगुच्छकैः
शोभिताश्शाखिशाखाग्रविस्तृतैर्वनभूमिषु। तत्फुल्लकुसुमामोदिशीतसुन्दरवायुभिः ॥

कङ्केलिकेलिपालीभिस्तथा गन्धफलीद्रुमैः। प्रत्यग्रकेतकभरै राजराजादनैरपि॥ २३॥
काकलीकोकिलालापैः कपोतशुकबर्हिणाम्। अत्यन्तसुन्दरतरं तद्वनं शुशुभे तराम्॥
रम्यादर्शतलात्यच्छस्फाटिकोपलवेदिभिः। प्रवालपरिक्लृप्तोरुमण्टपे रत्नमञ्चगा॥ २५॥
केन्दलूनं वातभुग्नं पत्रं तच्छदमप्यणु। निष्कासयति सा गौरी नित्यं तत्र सखीगणैः॥
रत्नबिल्वोरुमूलेषु चन्द्रस्फाटिककल्पितम्। लिङ्गजालमहोत्तुङ्गमौलिसङ्गतसोमजैः॥
किरणस्राविसुजलैर्बिल्वैः पुष्पैस्सुपूजितम्। तत्तीरे सरसो देव्या रत्नप्राकारमण्डितम्॥
नवरत्नाखण्डक्लृप्तस्तम्भविद्रुमपुत्रिकम्। चित्रवेदीतोरणाद्यैः पालीपालिविराजितम्॥
कपोतकुम्भकीटैश्चदेवकोष्ठैश्च शोभितम्। रुद्रावतारचरितैर्मणिसुन्दरविग्रहैः॥ ३०॥
तत्तत्स्थानकसङ्क्लृप्तराजद्वृषभशोभितम्। प्राकारगोपुरोपान्तमण्टपान्तर्गृहं तदा॥ ३१॥
कुम्भोज्वलन्महामौलिगर्भागारैकसुन्दरम्। गोपुरापारशिखरधूयमानपताककम्॥३२॥
रम्यविद्रुममुक्तोरुसरैरालम्बिपीठकम्। मणिमाणिक्यखचितज्योतिभिस्सुप्रभान्तरम्॥
गन्धचन्दनसिक्ताम्बुपरिक्लिन्नतलं सदा। धूपैरगरुसम्भूतैर्गुग्गुलूद्दामसौरभैः॥ ३४॥
अखण्डघनकर्पूरदीपमालाविराजितम्। तत्रान्तर्गृहपीठस्थं योजनं स्फटिकोज्वलम्॥
लिङ्गं तदम्बिकेशाख्यं कैलासेश्वरपश्चिमे। देव्या मनोगृहान्तस्थं दिव्यं तन्निर्गतं मुने॥
सुधांशुखण्डमौलिश्च भोगिभोगफणावृतम्। धृतत्रिपुण्ड्रनिटिलं बिल्वालङ्कृतमस्तकम्॥
मन्दारपुण्डरीकाच्छमालामौलिमनोहरम्। सुचन्दनघनालेपसुन्दरापीठलेपितम्॥
मणिप्रभामलमणिमौलिकान्तिविराजितम्। पूजोपकरणापारकुम्भै रत्नपरिछदैः॥
छत्रैश्चामरपंक्तीभिः पताकाव्यजनैरपि। रुद्राणीगणसाहस्रकरात्तवरवाद्यकैः॥ ४०॥
मड्डुमद्दलभेरीणां सहस्रैर्वेणुवैणिकैः। काहलापारनिनदप्रतिध्वनिविराजितम्॥ ४१॥
धूपपात्रैर्दीपपात्रैर्वरशङ्खसहस्रकैः। सहस्रदीपारार्तिक्यैर्मणिस्वर्णविनिर्मितैः॥ ४२॥
स्वहृत्पद्मे तदा देव्या ध्यातं तत्पुरतः क्षणात्। अदर्शि दिव्यं देव्याच प्राकारवरगोपुरम्
रत्नगर्भगृहान्तस्थं लिङ्गं तत्राम्बिकेशितुः। स्वदृशा दर्शयाञ्चक्रे देवी तत्राम्बिकेश्वरम्।
दृष्ट्वा जहर्ष नितरामम्बिकेशं तदाम्बिका। प्रदक्षिणप्रक्रमणै रम्यमञ्जीरपादतः॥४५॥
पद्मारुणपदाकारि ततस्सा सरसस्तटम्। ययौ मन्दं परिवृता स्वसखीगणमध्यगा॥

१. स्कन्दलूनमिति पाठः।

तपसा परिखिन्नाङ्गी कृशा विद्युल्लतेव सा । अम्भोजिनीतटं प्राप्य सा सस्नौ मणिसप्रभे
अम्बा तीर्थजले गाह्य परिधाय दुकूलके। अत्यन्तसूक्ष्मे चन्द्राच्छकान्तकान्तिसुवासिते
प्रक्षाल्य पाणी चरणौ [1]स्वर्गभृङ्गारुनीरतः । स्वर्णसिह्मासनासीना स्वसखीभिः परीवृता
स्नातां तां परिसेवन्ति तथालिगणकोटयः। देव्या जटावेणिकाश्च परिक्लिन्नां तथांशुकैः
शुभ्रैश्शिरोवेष्टयन्त्यस्तथान्याः पादधावकाः। तथान्या जगृहुस्तत्र वालातपनिवारणे॥
छत्राण्यपि तथैवेन्दुधाममण्डलशोभिभिः । चामरैर्वीजयन्त्येनां तथा व्यजनवायुभिः॥
वीजयन्ति परिश्रान्ताश्चिराध्युष्टां तपोवने। वालामवालकलनां धूपयन्त्यस्तथा जटाः
रत्नादर्शकरापारकज्जलानाश्च सम्पुटैः । पटवासैर्मुखामोदैः [2]कर्पूरागुच्छिकादिभिः ॥
ताम्बूलपेटीवीटीभिस्तथा कालाञ्जिकाकरैः। अरुणोत्तमकौसुम्भवस्त्रोद्धूलनकैश्शिवाम्
खड्गकोशकराश्चान्यास्तथा खेटधरास्स्त्रियः। निषङ्गकार्मुकधराश्शरधाराधरास्तथा ॥
स्त्रियः क्वणन्मणीदण्डवद्धालाबुमणीन्द्रजैः । वीणापाणिमुखोद्धुष्टगायनैस्तां सिषेविरं॥
सखीपाणिधृतोत्तुङ्गरत्नादर्शविलोकनैः । धृतत्रिपुण्ड्ररुद्राक्षा भस्मपाण्डरविग्रहाः ॥
दधाना वाससी शुभ्रे भृङ्गारुकरपल्लवाः । मणीन्द्रकल्पितमहापादुकाध्यस्तपादभूः ॥
मन्दं मन्दं सखीबृन्दैस्समायात्यम्बिकेश्वरम्। स्वसखीविधृतापाररत्नकुम्भधृतैर्जलैः ॥
सुवस्त्रपूतैः कर्पूरतगरागरुपाटलैः । सुवासितमहाकुम्भवक्त्रन्यस्ताम्रपल्लवैः ॥ ६१ ॥
नारङ्गमातुलिङ्गाम्रमोचाजम्वीरपानसैः । इक्षुद्राक्षाफलीगुच्छस्वच्छमोचाफलीकुलैः॥
हरिद्रारक्तधवलनारिकेलफलीभरैः । रम्यपूगीफलाभारमातुलिङ्गकपित्थकैः ॥ ६३ ॥
रत्नपात्नवराक्लृप्तफलजालैरनेकधा । नागवल्लीदलानाश्च भारैर्गिरिशिखोपमैः ॥ ६४ ॥
सहस्रारक्तसुदलफुल्लपङ्केरुहैस्तथा । फुल्लमन्दारजोद्दामकर्णिकारवकैस्तथा ॥ ६५ ॥
नीलनीलोत्पलानां च भारैश्च करवीरजैः । शम्यपामार्गदूर्वादिद्रोणार्ककुमुदैस्तथा ॥
वन्धूकारक्तदाडिम्भपुण्डरीकसुपाटलैः । विल्वैरारक्तमधुरत्रिशाखाभरपूरितैः ॥
[3]पात्रैः पात्रीकृता देवीमनुजग्मुस्सहस्रधा। सुनीरपूरितघटसहस्रैःप्रययुश्शिवाम्॥ ६८ ॥
छत्रचामरधारिण्यो वीणादर्शकरास्तथा । फलपल्लवराशीनां भारापारकरास्तथा ॥

१. स्वर्ण इति पाठः । २. कर्पूरगुलिकादिभिरिति पाठः ।
३. पात्रीपात्रीकरादेवीमिति पाठः ।

नानाशङ्खैः काहलीभिर्वीणावेणुमृदङ्गकान्। वादयन्ति पुरो देव्यास्सख्यस्तत्र महेश्वरीम्
तदाम्बिकेशं सम्प्राप्य तद्गोपुरवराग्रतः। विसृज्य पादुके दिव्ये प्रक्षाल्य च पदद्वयम्॥
गर्भागारं महेशस्य प्रविश्याम्बाम्बिकेश्वरम्। नत्वोपविश्य [1]चेलादिआसने सुन्दराकृतिः
प्राणानायम्य सा देवी दध्यौ प्राणेश्वरं हृदि ॥ ७३ ॥

स्कन्दः—

ज्वलन्निटिललोचनं विषगलार्चिमेघाङ्कक
प्रभाततिविराजितं जितमहेन्दुधामाननम्।
पटेभवरकृत्तिधृग्विधृतपोतचन्द्रं सरि-
ज्जटापटकुटीरकोज्ज्वलितभोगिभोगानतम् ॥ ७४ ॥
फणामणिविदीपितं स्वहृदिपङ्कजाध्यासितं
दधार चिरमम्बिका तपनसोमसप्तार्चितः।
प्रकाशनयनत्विषं मधुहराक्षिपद्माङ्घ्रिकं
सुबालमृगटङ्कधृक्प्रथितबाहुदण्डानतम् ॥ ७५ ॥
वराभयकराम्बुजं भसितपुण्ड्ररेखोज्ज्वलं
सुमन्दहसिताननं प्रणतपक्वबिम्बाधरम् ॥ ७६ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे अम्बिकेश्वरपूजनं नाम
चतुर्थोऽध्यायः ॥ ४ ॥

---

अम्बिकेशप्रसादोनाम पञ्चमोऽध्यायः.

स्कन्दः—

समाहितेन मनसा ध्यात्वैवं परमेश्वरम्। आवाहनं स्थापनञ्च सन्निधानं निरीक्षणम्॥
धेनुमुद्रां प्रदर्श्याथ पीठपूजां ततो द्विज। ध्यायेत्सदाशिवं साक्षादेवं सकलनिष्कलम्॥
शुद्धस्फटिकसङ्काशं त्रिणेत्रं शीतलद्युतिम्। विद्युद्वलयसङ्काशजटामुकुटशोभितम्॥
शार्दूलचर्मवसनं किञ्चित्स्मितमुखाम्बुजम्। रक्तपद्मदलप्रख्यपाणिपादतलाधरम्॥

१. चेलादिव्यापृते इति पाठः।

सर्वलक्षणसम्पन्नं सर्वाभरणभूषितम् । दिव्यायुधधरैर्युक्तं दिव्यगन्धानुलेपनम् ।।५।।
पञ्चवक्त्रं दशभुजमिन्दुखण्डशिरोमणिम् । अस्य पूर्वमुखं सौम्यं बालसूर्यसमछवि ।।६
त्रिलोचनारविन्दाढ्यं सोमधामार्धशेखरम् । दक्षिणं नीलजीमूतसमानरुचिरप्रभम् ।।
भ्रुकुटीकुटिलं घोरं रक्तवृत्तत्रिलोचनम् । दंष्ट्राकरालेन्दुलसत्स्फुरिताधरपल्लवम् ।।८।।
उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् । सविलासं त्रिणयनं चञ्चचन्द्रकलाधरम्।।९।।
पश्चिमं सूर्यचन्द्राभं लोचनत्रितयोज्वलम् । चन्द्ररेखाधरं सौम्यं मन्दस्मितमनोहरम्।।
पञ्चमं स्फटिकप्रख्यमिन्दुरेखाकलाधरम् । अतीव सौख्यमुत्फुल्लसोमसूर्याग्निचक्षुषम्।।
दक्षिणे शूलपरशुं वज्रखड्गानलोज्वलम् । सव्ये परशुनाराचघण्टापाशाङ्कुशोज्वलम् ।।
निवृत्या जानुसम्बद्धमानाभेश्च प्रतिष्ठया। आकण्ठं विद्यया तद्वदाललाटन्तु शान्तया।।
तदूर्ध्वं शान्त्यतीताख्यकलया परया तथा। पञ्चोर्ध्वव्यापकं तस्मात्कलापञ्चकविग्रहम्।।
ईशानमकुटं देवं पुरुषास्यं महेश्वरम् । अघोरहृदयं तद्वद्वामगुह्यं सदाशिवम् ।। १५ ।।
सद्योजातपदं मूर्तिमष्टत्रिंशत्कलामयम् । मातृकामयमीशानं पञ्चब्रह्ममयं तथा ।।१६।।
ओङ्काराख्यमयञ्चैव हंसशक्त्या समायुतम् । पञ्चाक्षरमयं देवं षडक्षरमयं तथा।।१७।।
अङ्गषट्कमयञ्चैव सर्वज्ञानमयं तथा । सामान्यार्घ्यविशेषार्घ्यैः पञ्चपात्राष्टपात्रकम् ।।
पञ्चामृतैः पञ्चगव्यैर्नीरपूरितकाञ्चनैः । घटैः फलरसैश्चैव दध्यक्षतकुशोदकैः ।। १९ ।।
यवैस्सिद्धार्थकैर्युक्तश्चार्घ्यो देव्या प्रकल्पितः । शतधारामयैः पात्रैस्साहस्रवरधारकैः ।।
शङ्खैश्च दक्षिणावर्तैस्सव्यावर्तैश्च शङ्खकैः । संस्नाप्य शङ्खतोयेन प्रणवप्रोक्षणक्रमात् ।।
भवे भवे नातिभवइति पाद्यं प्रकल्पयेत् । रुद्राय नम इत्युक्त्वा दद्यादाचमनीयकम् ।।
वामदेवाय नम इति वस्त्रं तत्र प्रकल्पयेत् । ज्येष्ठाय नम इत्युक्त्वा दद्याद्यज्ञोपवीतकम्
कनिष्ठायनमइत्युक्त्वापुनर्भस्माभिपातयेत् । कालायनमइत्युक्त्वादद्याद्गन्धंसुगन्धितम्
कलविकरणाय नम इत्यक्षतान्परिकल्पयेत्। बलविकरणायेतिदद्यात्पुष्पाणि साम्बिका
बलप्रमथनायेति धूपं दद्यान्मुने तदा । सर्वभूतदमनाय चेति दीपं ततो द्विजाः।।२६।।
मनोन्मनाय इति नैवेद्यञ्च समर्पयेत् । ताम्बूलञ्चैव नीराजं तथोपचरणादिकम्।।२७।।
सर्वं पञ्चाक्षरेणैव कुर्याद्देवी ततो मुने । अर्चयेत्परमं देवं प्रणवेन शिवेन च ।। २८ ।।
त्रियम्बकेन मन्त्रेण सर्वं तत्र प्रकल्पयेत् । आधारपीठपूजादि कृत्वा देवी महेश्वरी ।।

पुनश्च विस्तरेणैव चाम्बिकेशमपूजयत् । सखीभिश्च समानीतैस्सम्भारैर्मनसा ततः ॥
शृणु त्वं सावधानेन चैकाग्रमनसा मुने । एवं हृत्पङ्कजे पूज्य वाह्येऽप्यम्बा प्रपूजयत् ॥
तत उद्वास्य निर्माल्यं पूर्वपूजाप्रकल्पितम् । पञ्चाक्षरावृत्तिपरा पञ्चास्यध्यानतत्परा ॥ ३२
स्वसखीकल्पितापारपूजाभारैश्च सुन्दरैः । अम्बिकेशं महालिङ्गं परिचिन्त्य प्रपूजयत्

सुगन्धवरतैलजैर्वरघटैश्च देवी गवां
पयोनिभृतसद्घटैर्दधिजमण्डखण्डैर्घटैः ।
नवाज्यवरगन्धजप्रसृतमोदमाद्यद्घटै-
रक्षुद्रफलदायिभिर्वरसुक्षौद्रधाराघटैः ॥ ३४ ॥
वलक्षजमहेक्षुजप्रथितसारधारारस-
प्रकाशसितशर्करागिरिभिरीशलिङ्गेऽम्बिका ।
मधूत्थमधुपर्कतो मधुरपञ्चगव्यैश्शिवै-
स्सुनारिलजलार्पणैर्विमललिङ्गमौल्यम्बिका ॥ ३५ ॥
अपारकदलीफलैर्लिकुचसारनीरैस्तथा
सुपानसजकोशकैर्मधुगलोरुपीतप्रभैः ।
तथेक्षुसुरसालजैर्मधुरचन्दनोत्थैर्घटै-
र्गिरिस्रवझरीभरैर्गिरिशलिङ्गमम्बासिचत् ॥ ३६ ॥
सहस्रशतधारया मणिजकुम्भपीठोत्थया
सुरुद्रचमकैश्शिवा वररथन्तरैर्वामकैः ।
सुधूपितगृहं विभोर्वहुलवाद्यसङ्घारवै-
र्दिशां श्रवणमङ्गलैर्वरसुशङ्खनादैरपि ॥ ३७ ॥
जलन्धररवोपमैः पटहदुन्दुभीनां गणै-
र्मृदङ्गवरघोषकैर्विमलशीतवाराङ्घटैः ॥ ३८ ॥
अभिषिच्य भिषग्वरं महेशं विमलैः पट्टदुकूलहेमवस्त्रैः ।
परिवेष्ट्यामलमम्बिकेशमम्बा मृदुलैर्यक्षसुकर्दमैश्च गन्धैः ॥ ३९ ॥
परिलिप्योत्तमतुङ्गलिङ्गमौलिं विमलापीठतलं तदाम्बिकेशम् ।

वरकर्पूरजखण्डदीपमालामणिकान्तद्युतिभिर्घृतादिदीपैः ॥ ४० ॥
अनेकरत्नोत्तमगोलकोद्यत्फणीफणाभ्राजितलिङ्गमौलिम् ।
हीरोत्थपुण्ड्राङ्कितफालदेशं मणीसरालोलितमौक्तिकौघम् ॥ ४१ ॥
नैपथ्यजालैर्वरपुष्पमालां विल्वादिमालाः कमलोरुमालाः ।
सुमल्लिकाहल्लकमल्लिकुन्दमालाशतैर्गन्धफलीसरैश्च ॥ ४२ ॥
सुपाटलामोदितमालिकाभिरुत्फुल्लनीलोत्पलमालिकाभिः ।
मन्दारमालादिभिरम्बिकेशमम्बा समावेष्ट्य मुदं प्रपेदे ॥ ४३ ॥
विल्वानाञ्च सहस्रकैश्च त्रिदलैरारक्तपङ्केरुहै-
र्मन्दारैर्वरचम्पकादिकुसुमैस्सत्पुण्डरीकैश्शिवा ।
नाम्नाञ्चापि सहस्रकैश्च शतकैस्सम्पूज्य हृष्टाभव-
त्पुण्यं लिङ्गमुमापतेः प्रियतरं धूपैस्तथाधूपयत् ॥ ४४ ॥
अगरूत्थसुगुग्गुलूभिरीशं वरसाम्राणिसुधूपवर्तिपात्रैः ।
मणिदीपैर्वरचन्द्रखण्डदीपैर्घृतदीपैस्सितवर्तिभिस्सदोद्यत् ॥ ४५ ॥
मधुरान्नादिसुराशिभिस्तदाम्बा घृतसूपाकुलसोपदंशजालैः ।
फलजालैर्दधिपायसादियुक्तैर्मधुरैर्भक्ष्यवरोत्थराशिजालैः ॥ ४६ ॥
विनिवेद्य महेशमिष्टलिङ्गं वरताम्बूलगिरिप्रचारपूरैः ।
विनिवेद्य सुगन्धगन्धयुक्तैर्वरतौर्यत्रिकहावभावलास्यैः ॥ ४७ ॥
पदमञ्जीररणज्झणादिशब्दैर्मृदुवेणूरवतालशङ्खनादैः ।
मृदुमाद्यत्करतालदुन्दुभीनां स्वनमद्दलकाहलोत्थनादैः ॥ ४८ ॥
कलहंसगतीसुयौवनोद्यत्तरुणीरुद्रगणाङ्गनादिकुम्भैः ।
अतिसोमसमानछत्रपङ्क्त्या वरहंसोत्थसुपक्षपक्षताभैः ॥ ४९ ॥
परिदोधूय सुचामरोत्थवातैर्व्यजनैः पिञ्छविचित्रबर्हिजातैः ।
सुपताकततिप्रकाशमानैर्विविधैश्चित्रपटप्रकल्पितैश्च ॥ ५० ॥
अतिसुन्दरकान्तिकान्तकान्तैर्मुकुरैर्दृष्टिपथे शिवस्य दत्वा ।

१. वर्तिवृक्षपात्रैरिति पाठः । २. पायसाज्ययुक्तैरिति पाठः ।

अतितोषतरोरुहर्षवर्षैर्नतिभिः प्रक्रमणैस्तदा सिषेवे ॥ ५१ ॥
परिपूज्य शिवं प्रकृष्टवाचा मधुरं स्तौति महेशमम्बिकेशम् ।
विमलोदारसुरुद्रवीणया सिततुम्बीफलकान्तिकान्ततन्त्र्या ॥ ५२ ॥
मधुरं गायति शम्भुनामजालं नखनिक्कणनैर्मुदा तदा भवानी ॥ ५३ ॥

गौरी—

हर हर शङ्कर चन्द्रशेखर प्रमथाधीश्वर विश्वनाथ शम्भो ।
करुणारससारशोभिताङ्गाङ्गदकाहीश्वर देवदेव पाहि ॥ ५४ ॥
अम्बिकेश गगनातिगमौले लम्बितोरुजटयाखिलकाश ।
व्योमकेश विनतार्तिविनाश नागभूषणक कार्मुकपाणे ॥ ५५ ॥
हरिवाणामलपद्मनेत्र शम्भो कृतदक्षाध्वरशिक्षवीक्षण ।
दग्धकामपुरवर्ग मदोद्यत्कुम्भिकुम्भदलनामलपाद ॥ ५६ ॥
गिरिराजसुताजटोरुवन्ध ह्यव मां घोरतपोभिरुग्रदेहाम् ।
भव भीमोग्र कपालमालजालिन्करशूलामलभूतिभूषिताङ्ग ॥ ५७ ॥
त्यदपाङ्गततिप्रभूतकामा किमिहेहामि तवाहृतेर्ममाद्य[1] ।
गणनाथषडाननादिसेव्य प्रकटापारश्रुतीभिरीड्यपाद ॥ ५८ ॥
दहरगगनसंस्थ [2]विश्वनाथ प्रमथाधीश नतास्मि ते पदाब्जम् ॥ ५९ ॥

स्कन्दः—

इत्थं सम्पूज्य सा देवी कैलासाचलमूर्धनि । अम्बिकेशं महालिङ्गमम्बिका भक्तितत्परा ।
प्रणनाम मुहुर्भक्त्या दृष्ट्वा लिङ्गमुमापतेः। महानन्दाम्बुधौ मग्ना नान्यज्जानाति किञ्चन
एवं तत्रार्चनरता द्वादशाब्दं किलाम्बिका । त्रिकालं सावधानेन प्रदोषेषु विशेषतः ॥
महाकैलासशैलाग्रेऽप्यम्बिकेशशिवालये । अपूजयत्तदा देवी चाम्बिकेशं द्विजोत्तम ॥
नक्ताशनरता देवी स्वसखीभिः परीवृता । तरुणेन्दुकलामौलिलिङ्गं सम्पश्यती सदा ॥
निनाय सा क्षपास्तत्र महादेवी सदा मुदा । स्वयं सखीभिस्सहिता कुसुमापचयोद्यता ॥
कैलासमौलिविपिने पुष्पासारयुते सदा । फुल्लाब्जिनीषु सततं पङ्कजाहरणादरा॥६६

१. तवाहृतेऽहमाद्य इति पाठः । २. विश्वधाम इति पाठः ।

विल्वकण्टकतुन्नापि स्वयमेवाहरच्छिवा। फलानि स्वादुभूतानि समाहृत्याम्बिकेश्वरम्[1]
निवेद्याश्नाति नियतं सखीभिस्सहिता शिवा। यन्निवेदितमीशाने तदश्नाति कुतूहलात्
पवित्रं शिवनैवेद्यं ज्ञानप्रदमनुत्तमम्। जितामृतरसास्वादं पापसङ्घविनाशनम् ॥ ६९ ॥
आस्वाद्य शिवनैवेद्यं जलमन्नं फलादिकम्। देवी हृष्टतरा नित्यमष्टमूर्त्यर्चने रता॥७०॥
स्वतपोत्थं कष्टजालं जहौ लिङ्गसमर्चनात् ॥ ७१ ॥

देव्या कैलासमौलौ सततपरिचितापारपूजाप्रभावै-
स्तुष्टश्चैवाम्बिकेशो गणगणसहितः प्रादुरासीन्महेशः।
देवीं वीक्ष्य मुदाह गाढभुजकैरालिङ्ग्य धन्येऽम्बिके
को वेत्ति प्रसभं ममेष्टदमहालिङ्गार्चनायाः फलम् ॥ ७२ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे अम्बिकेशप्रसादोनाम
पञ्चमोऽध्यायः ॥ ५ ॥

---

## शिवगौरीसंवादोनाम षष्ठोऽध्यायः.

स्कन्दः—

ततो देवीं महादेवश्शिवश्चन्द्रकलाधरः। प्रतिपच्चन्द्रसङ्काशां तपसा तनुतां गताम् ॥१॥
शरद्घनोद्यत्तटिता सदृशामलविग्रहाम्। भस्मच्छन्नां त्रिपुण्ड्राङ्कफालभागमनोहराम् ॥
पिशङ्गितमहावेणीजटिलालकशोभिताम्। अवग्रहग्रहाकारां भूषाहीनाञ्च सुन्दराम् ॥
वल्कलाजिनसंवीतां रुद्राक्षामलकङ्कणाम्। भद्रां भद्रतराकारां सुधाधामसमाननाम् ॥
बाहुभ्यां पीनवृत्ताभ्यां तां देवीं प्रीतिवित्तराम्। गाढं तद्धृदये देवः प्रविष्ट इव सस्वजे॥
स्वाङ्कसिंह्मासनासीनांताञ्चकारामलेक्षणां।पस्पर्शशंतमाभ्याञ्चपाणिभ्यांतांकृशाङ्गकाम्
कमलोदरसौभाग्यरञ्जिताभ्यां महेश्वरः। सुधांशुवीक्षणोत्फुल्लनयनामृतशीकरैः ॥७॥
प्लावयामास तां देवीमापादतलमस्तकम्। सुधारसवरस्यन्दिनयनेनातुलेन च ॥ ८ ॥
कृपाकटाक्षतोवीक्ष्यत्र्यक्षोदाक्षायणीमुमाम्।शिवशङ्करपाणिभ्यां संस्पृष्टा जगदम्बिका॥
आनन्दवारिधिस्फारतरङ्ग इव साप्यधत्। क्षीरोदधिरिवोद्दामतरङ्गावलिभासुरः॥१०॥

---

[1] अम्बिकेश्वरे इति पाठः।

चन्द्रोदयमिव प्राप्य गिरिजानन्दिताभवत् । सञ्जातपुलका देवी ह्यानन्दघनसुन्दरा॥
प्रणनाम तदा देवी शङ्करं लोकशङ्करम् । स्पृशन् स्वपाणिकमलैस्तत्पदाम्भोरुहद्वयम्॥
जगदानन्दकन्दोद्यत्सुधामण्डलवर्छिवाम् । प्रणाममुखरां देवीं दोर्भ्यामुत्थाप्य शङ्करः
स्वाङ्कमञ्चस्थितां देवीं चक्रे कैलाससौधगः। दिव्यसिंहासनासीनो देवो देव्या मुनीश्व
प्राहालिङ्ग्य महादेवीं पुनः पुनरुमापतिः। स्पृशन् स्वपाणिना देव्या वदनाम्बुजमुत्तमम्
स्विन्नं शङ्करसंस्पर्शदर्शनानन्दभासुरम् । पद्मिनीव तदोत्फुल्लपङ्कजाकारसश्रियम् ॥
उद्यद्भानुकरस्पृष्टकमलोत्फुल्लसोदरम् ॥ १७ ॥

ईश्वरः—

खिन्नासि तपसा गौरि जाने तव चिकीर्षितम्। शिरीषमृदुलातेऽद्य तनुस्तापविशोषित
भ्राजदारक्तकमलसोदरं तव वक्त्रकम् । हिमसारपरिक्लिन्नं पङ्कजोपममद्रिजे ॥ १९ ।
वदनं पक्षयोश्चश्चन्द्रवन्न विराजते । नीलालकमिदं सुभ्रु भस्मरेणुसुधूसरम् ॥ २० ।
वनप्रसूनरजसा वातानीतेन पाण्डरम् । जटालमिदमत्यन्तं त्वद्वेणीमण्डलं शिवे ॥२१
वल्मीकविलयातश्च व्याल्यङ्गमिव धूसरम् । परिक्लिन्नमिदं भाति भूषणैर्हीनमप्युमे ॥
रत्नकुण्डलसङ्कुले श्रवणे ते विलासिनि । रुद्राक्षमौक्तिकायुक्तकुण्डलाभ्यां विभूषिते ।
तपसा कल्पकेनापि तपोमूर्तीव राजसे । द्विजराजसमानास्ये सुनसे तेऽद्यनासिका ॥
रत्नकुसुममहामुक्ता विहीनापि विशोभते । त्वद्वक्त्रमण्डलं देवि सिन्धूरतिलकान्वितम्।
भस्मत्रिपुण्ड्रतोद्भाति वदनं तिलकोज्झितम्। त्वत्कण्ठमण्डलं मुक्तासरहीनमपि प्रिये।
रुद्राक्षमालाजालैश्च नितरामपि भासते । अपर्णे पर्णवसनैः कथं क्लिष्टा हिमागमे॥२७
प्रचण्डसूर्यकिरणैस्सोमजैरपि शङ्करि । ऋतुभिर्वातवर्षैश्च परिक्लिष्टासि शैलजे ॥२८
विल्वार्जनेनतेपाणिःक्विणितःकण्टकेनहि। त्वत्पाणिस्पर्शनेनाद्य धन्यावृक्षास्सुपुष्पिता
त्वत्पादपङ्कजस्पर्शैः कैलासोऽयं नगेन्द्रजे। धन्यधुर्यत्वमापन्नो देवैर्मान्यस्सदा गिरिः
तवाङ्गमिदमत्यन्तं सुकुमारतरं शिवे । तपसातीवसन्तप्तं तपसामेकनायिके॥ ३१ ॥
विम्बोपमाधरेणाद्य त्वया जिह्वाग्रतो मम। पञ्चाक्षरी सदा जप्ता रुद्रोप्यावर्तितस्सदा
त्वया स धन्यो मनुराड्रुद्रो वेदेषु भासुरः। तव क्रीडेयमतुला लोकशिक्षार्थमम्बिके॥ ३

१. पक्षयोर्द्वन्द्व इति पाठः ।

त्यक्ता त्वया राङ्कवादिवरास्तरणसन्ततिः। मञ्चेषु रत्नसौधेषु दीपधूपोद्यतेषु च॥३४॥
शोभितेषु मणिप्रोद्यत्सौधवातायनस्थिता। नगाग्रमौलौ कठिनभूभस्मस्थानगा सदा॥
मालूरलूनपत्रैश्च वातपोतप्रपातितैः। परिक्लिष्टासि नितरां तापसीव नगेन्द्रजे॥ ३६॥
त्वया न विदितं किञ्चित्त्रिषु लोकेषु विद्यते। त्वमेव तपसां देवी फलदानोन्मुखी सदा
त्वत्पादाम्बुरुहध्यानैस्सर्वैः प्रापि मनोरथः। ब्रह्मविष्ण्वादिविबुधैः प्रमथैर्मुनिभिश्शिवे॥
त्वया ततमिदं विश्वं त्वत्कटाक्षैकभासुरम्। सदेवासुरमुत्कृष्टं नानावननगाश्रयम्॥३९॥
लोकजालमिदं भद्रे त्वया सृष्टं सनातने। त्वयैव पालितं चान्ते त्वय्येव लयमेष्यति॥
त्वत्कृपापाङ्गसङ्गेन सर्वेषामणिमादयः। सिध्यन्ति सिद्धयश्चाष्टौ तेन धन्या गुणाधिकाः
तएव सर्वभाग्यानामाकारास्ते सदोज्वलाः। तएव सुकृतां सङ्घैः परीताश्श्रीयुताश्च ते॥
ये वै त्वदीक्षणैर्हीना निर्भाग्याः पापवत्तराः। विशन्ति नरकं घोरं सदा दुःखैकभागिनः॥
तवैव निमिषोन्मेषौ जगतां प्रलयोदयौ। त्वं श्रुतिः परमा देवी त्वं वै स्मृतिरनुत्तमा॥
त्वं पृथ्वी सलिलं व्योम त्वं वायुस्सोम एव च। घनद्रव्यव्यापकत्वं चलनं दीप्तयस्सदा॥
भूतेषु शक्तिरसि वै त्वया ततमिदं जगत्। त्वच्छक्तिहीनश्च सदा जडतामुपगच्छति॥
सूर्ये मरीचिकाशक्तिश्शीतभानौहि शीतजा। दाहकत्वं तथा वह्नौ पवने चलनात्मिका॥
सम्पच्छक्तिस्तथैवेन्द्रे वरुणेऽपाम्पतित्वता। ईशाने वा महाशक्तिःपालिनी त्वं जनार्दने
विधौ वै सर्जकीशक्तीरुद्रेशक्तिस्तिरोधकृत्। सदाशिवेऽनुग्रहदा त्वत्तएवास्मि शक्तिमान्
अहमप्यन्ततो देवि सर्वं त्वच्छक्तिवैभवम्। येषु येषु च भूतेषु या या शक्तिरनुत्तमा॥
सर्वासि सर्वशक्तीनामाधारा त्वं सनातनी। शान्तिःपुष्टिर्धृतिस्स्वाहा स्वधा त्वं परमेश्वरि
त्वयैवं सृज्यते विश्वं त्वया पालितमेव हि। त्वय्येवान्ते प्रविशति त्वया सर्वमिदं सदा॥
त्वत्कृपापाङ्गतो हीनमशक्तं भाति मे जगत्। माया त्वं तव मायोत्था लोकास्सर्वे चराचराः
ब्रह्माण्डकोटयो देवि विधिविष्णुमहेश्वराः। इन्द्रास्समनवो विप्राः पितरो देवतागणाः॥
ध्रुवाधारा ग्रहास्सर्वे स्वर्गनारकसङ्गतिः। देवतिर्यङ्मनुष्याद्या यातायातपरायणाः॥५५॥
कार्पासचक्रजालात्तसूत्राधोर्ध्वगता इव। तैलिकागारवृषवन्मेरुमौलौ महर्षयः[1]॥ ५६॥
भ्रमन्ति मायया तेऽत्र ह्यनित्ये नित्यमानिनः। सुखदुःखसमासक्ताःकामक्रोधपरायणाः

१. ग्रहर्षयः इति पाठः।

मोहान्धितमिदं विश्वं धर्माधर्मादिपाशकैः। वर्णाश्रममहादुःखधर्मैरत्यन्तमोहितम्॥५८
आत्मानं मामविज्ञाय जातिदेहाभिमानतः। आहारभयनिद्रादियोनिभोगादिदूषितम्॥
जन्मनाशैकबहुलं षडूर्मिविकलं जगत्। देवतिर्यक्सुरनरतिर्यगत्यन्तदुःखितम् ॥६०
पशुभूतमिदं देवि त्वन्मायाशक्तिवैभवैः। त्वद्दयामोचितं देवि यदि स्यात्तत्तपस्यया।
शक्तिद्वयोज्झितं देवि भविष्यति किलामले। तादृशी त्वं परा शक्तिर्मदनन्यापि शङ्करी
तपोरतासि देवेशि तव किं तपसाम्बिके ॥ ६३ ॥

सूतः—

देवीं प्राह महेश्वरस्त्रिजगतामाधारभूतोहर-
श्चेत्थं कैलासमौलौ सुरवरमुनिभिर्वर्जिते मत्प्रभावात् ।
एतल्लिङ्गसमर्चनेन यदुमे सर्वेषु लोकेष्वपि
तस्मादप्यमितं विमुक्तिदमतः कैलासमौलौ कृतम् ॥ ६४ ॥
एतल्लिङ्गसमर्चनार्जितमहापुण्याम्बुधेः पारगा
त्वन्नाम्ना प्रथितं त्रिलोकजननी दृष्टाम्बिकेशं त्वहम् ।
तुष्टोऽत्यन्तदयारसैकहृदयः किं देयमस्त्यम्बिके
त्वत्तो नान्यदिदं जगत्सुरनरं त्वं शङ्करीवासि मे ॥ ६५ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे शिवगौरीसंवादो नाम
षष्ठोऽध्यायः ॥ ६ ॥

---

देवीसान्त्वनं नाम सप्तमोऽध्यायः.

स्कन्दः—

इत्युक्त्वा शङ्करेणाथ प्राञ्जलिः परमेश्वरी। प्राह प्रणम्य देवेशं भगवन्तं महेश्वरी ॥१॥
तुष्टाव हृष्टा कान्तं स्वमष्टमूर्तिं कृपाकरम्। शिपिविष्टं कष्टनाशं पुष्टा देवी हृदा तदा॥२

देव्युवाच—

श्रीशङ्कर प्रियकरामल वेदगीत विष्ण्वब्जजार्चित महाजनिमेश्वर त्वम् ।
पाहीश मामकधिया शशिखण्डमौले भक्तां त्वनन्यकरुणारसवीक्षणेन ॥ ३॥

हेशङ्कर स्मरहरान्धकसूदनेश विश्वेश भर्ग भगनेत्रनिपातनाद्य ।
पाहीश मामकधिया शशिखण्डमौले भक्तां त्वनन्यकरुणारसवीक्षणेन ॥ ४॥
गङ्गाधर प्रमथनाथ पिनाकपाणे मार्तण्डनन्दन हराव्यय दीनबन्धो ।
पाहीश मामकधिया शशिखण्डमौले भक्तां त्वनन्यकरुणारसवीक्षणेन॥ ५॥
षड्वक्त्रसिन्धुरवराननननन्दितेन्दुनेत्रोरुलोकन महेश्वर दक्षशिक्ष ।
पाहीश मामकधिया शशिखण्डमौले भक्तां त्वनन्यकरुणारसवीक्षणेन॥ ६॥

इति संस्तुत्य सा देवी प्राञ्जलिः प्राणमच्छिवम्।त्वत्सङ्गताहं देवेश शक्तिरस्मि सनातनी
सृजामीदं जगज्जालं सर्वं देवासुरात्मकम्। नदीनदगिरिद्वीपसमुद्रैर्भूतवर्गकैः ॥ ७ ॥
तथापि देहधर्मात्तप्रणयेनाहमीश्वर । लोकस्यानुग्रहं कर्तुं तपः कृतमहो शिव ॥ ८ ॥
स्वतन्त्रापि भवेन्नारी तथा भर्तृप्रसादतः । कृतसर्वक्रियापीश राजतेऽत्यन्तमुत्कटम् ॥
तीर्थयात्रां व्रतारम्भं लिङ्गार्चनमपि प्रभो । भर्त्राचानुमता नारी कृत्वा पुण्यमवाप्नुयात्
तथापि लोकगुप्त्यर्थं क्रीडेयं मम शङ्कर। नावयोर्विद्यते भेदश्चन्द्रचन्द्रिकयोरिव॥११॥
आवाभ्यां मनुते भेदं स एव नरगर्दभः। तव कैलासवसतेरुत्कटं सुन्दरं शिव॥ १२ ॥
मयात्वयायोगिनीभीरभ्रणाक्रीडमुत्तमम् । तत्स्थानंकल्पनीयंमेनान्यःकामोऽत्रविद्यते॥
कामाङ्गदाहपादाब्जध्यानतो नैव कामिता। त्वदीयालोककामेन कामस्सञ्जीवितो मया
तथा वदन्त्याममम्बायां देवः प्राह महेश्वरः ॥ १५ ॥

ईश्वरः—

किमशक्यमिदं देवि जगन्निर्माणपण्डिते। न किं त्वत्स्मृतिमात्रेण भवत्या कल्पितं यदि
तदेव मे कान्ततरं [2]विहारवरमद्रिजे । तस्मादुपक्रमः किन्नुक्येयं ते तपसि स्थितिः ॥
किं त्वेकं मम कैलासे तव हृत्पद्मसद्मगम्। बहिस्तन्निर्गतं देवि चाम्बिकेशाख्यमुत्तमम्
लिङ्गं मङ्गलदं मेऽत्र तेन कान्ततरो नगः। योऽम्बिकेशं महाधाममौलिकुम्भाग्रलोचनः
त्रिलोचनोहिभवतितथान्येचद्विलोचनाः । दृष्ट्वात्वत्पूजितंलिङ्गमम्बिकेशाख्यमम्बिके॥
नान्यत्र रमते चेतो यथा त्वद्गात्रसङ्गमात्। तथा मे लिङ्गसङ्गेन त्वदीये परमेश्वरि ॥
अतः कैलासलिङ्गेषु श्रेष्ठमेतत्सनातनम्। प्रोत्फुल्लं मानसाब्जं मे दृष्ट्वा लिङ्गमिदं तव॥

१. निशाटनाश इति पाठः । २. विवाहारवमिति पाठः ।

इत्युक्त्वाहर्षविवशोगाढमालिङ्ग्यतांशिवां। सुस्नातांतांतदादेवींदिव्यसिंहासनाश्रिताम्
भूषाभिर्भूषयामास मुकुटेनार्करोचिषा। सुधाधामेन्दुखण्डोद्यद्धीरमुक्तासरावृताम्॥
नूपुरैरङ्गदैर्देवो स्वयं देवीमभूषयत्। नखाग्रैस्तज्जटालोलवेणीजालं विमुच्य वै॥ २५॥
रत्नचूडामणिव्रातैरभूषयदुमापतिः। चन्द्रनागरुकर्पूरैर्देव्यङ्गं परिलेपयत्॥ २६॥
कुसुम्भकान्तिविद्योतिकोटिबालार्कवर्चसम्। वसनैर्वासयाञ्चक्रे निचोलेनापि शङ्करः॥
धूपैर्दीपैस्सुमोद्दामगुम्फैः कचविराजितैः। ताम्बूलजालैस्सुभगैर्नानाफलवराशनैः॥
स्वर्णपात्रपरीक्लृप्तैस्स्वयन्देव्या महेश्वरः। बुभुजे नन्दितहृदा स्वयन्देव्या महेश्वरः॥
देव्यास्तद्वदनाम्भोजे फलखण्डानि शङ्करः। भुङ्क्ष्वेति तपसा गौरि क्लिष्टानशनेन च॥
चिरंक्लिष्टासि धन्यासि मान्यासि च सुरासुरैः। इदङ्कैलासलिङ्गस्य नैवेद्यम्भक्ष्यभोज्यकम्
भुङ्क्ष्वाम्बिकेशलिङ्गस्य [२]निवेद्य मधुरं मधु। यो नैवेद्यं महेशस्य भुक्त्वा सन्तुष्टमानसः॥
स सर्वतपसां राशिं योगयागफलं शिवे। प्राप्नोति मुक्तिसाम्राज्यं किमन्यत्तपसा शिवे॥
तस्माद्भुङ्क्ष्व महेशस्य नैवेद्यं मधुरं मृदु। नाभक्तैर्भोज्यमेतद्वै भक्तैर्भोज्यं सदैव हि॥ ३४॥
इत्युक्त्वा भोजयामास नैवेद्यैः फलमण्डलैः। प्रक्षाल्य हस्तौ चरणौ देवो देव्या महेश्वरः
परार्ध्यास्तरणास्तीर्णे सोपधानोरुमञ्चके। कैलासे हीरमणिजसौधे दिक्तटभूषिते॥
निषण्णश्चाम्बया देवो ताम्बूलं चाप्यगृह्णत। ताम्बूलरसधाराभिस्सन्तृप्तां परमेश्वरीम्॥
पस्पर्श पाणिना देवो देव्या वदनपङ्कजम्। क्लिष्टासीति च पाणिभ्यां मुहुर्मुहुरनन्यधीः
सखीगणकरापारव्यजनैस्तामवीजयत्। एवं संवत्सरगणान्क्रीडन्तौ नगमूर्धनि॥ ३९॥
नानाहारविहारैश्च स्वतन्त्रौ परमेश्वरौ। कैलासमौलिसौधेषु रम्यसानुवनेष्वपि॥ ४०॥
सरस्सु विमलोदारपद्मह्लकशोभिषु। लिङ्गालयेषु पुण्येषु लिङ्गपूजापरौ शिवौ॥ ४१॥
लिङ्गसन्दर्शनापारकुतुकौ परमेश्वरौ। मृगपक्षिगणानाञ्च दर्शनाप्यायितान्तरौ॥ ४२॥
प्रफुल्लवनसञ्चारक्रीडामातङ्गसन्निभौ। रुद्राणीकरजालोत्थवाद्यनृत्तावलोककौ॥ ४३॥
रम्यस्वच्छसुधाम्भोधौ नौकाक्रीडापरायणौ। सुरुद्रवीणानिनदैस्तुष्टौ हृष्टतरौ शिवौ॥
सोमधामकरासारनिशासु नगमूर्धनि। दिव्यक्रीडारसभरैः क्रीडतुस्तौ सदा शिवौ॥
सरोवगाहनपरौ वरयन्त्रोरुसर्जकौ। कन्दुकैश्च तथाक्षैश्च दीव्यन्तौ सौधभूमिषु॥ ४६॥

१. गुल्कैरिति पाठः। २. नैवेद्यं मधुरं मृदु इति पाठः।

डोलान्दोलैश्च मुदितौ रम्यहल्लीसलास्यकैः ॥ ४७ ॥

स्कन्दः—

एवन्ते शिवयोरपारपरमानन्दप्रदाकौतुक-
क्रीडासारविलासलोलहृदयौ मूर्धन्यशैलस्थितौ ।
नानादेवयुगादिवर्तनमहाकालातिगौ तत्र तौ
को वा वेत्ति महेशदिव्यचरितं प्रोक्तं हि सङ्क्षेपतः ॥ ४८ ॥



इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे देवीसान्त्वनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## देवस्तवो नाम अष्टमोऽध्यायः.

स्कन्दः—

शृणु दिव्यचरितन्त्वम्महेशस्य त्रिशूलिनः। निटिले चित्रभानोश्च पापसङ्घनिवर्हणम्॥
सावधानमना विप्र जैगीषव्य महामते। मणिद्वीपस्य चोत्पत्तिं विस्तराद्वदतो मम॥२॥
याःकथामुनयश्श्रुत्वा गणा अपि सुरोत्तमाः। भद्राणि प्राप्नुवन्त्येव स्थानंविन्देत्सुदूरगः

सूतः—

पुनः प्रणम्य सा देवी प्राह भर्तारमीक्षती। मनसा सुप्रसन्नेन चोत्फुल्लाननपङ्कजा॥ ४ ॥
पद्मकोशनिभाभ्यांसाशयाभ्यांप्राञ्जलिश्शिवा। स्वाशयंविवशन्तस्मैसाजगादत्रिशूलिने॥
दर्शयन्तीव सा देवी प्राह देवं घृणानिधिम्। रोमाञ्चकञ्चुकवती महाप्रणयगर्भिणी॥६॥
चार्वक्षी तं विरूपाक्षमक्षदूरन्तदैक्षत ॥ ७ ॥

देव्युवाच—

देवदेव महादेव लीलाललितविग्रह। खट्वाङ्गपाणे भगवन्निभाजिनधराव्यय ॥ ८ ॥
चारुचन्द्रकलामौले नागहाराङ्गभूषण। प्रमथाधीश मन्नाथ लोकनाथ जगत्पते॥ ९ ॥
जगन्मयाव्ययापारस्थितिरक्षणनाशक। किं तवाद्य विलम्बेन साम्ब शम्भो वदाधुना॥
विचित्रशक्ते भगवंस्त्वया मे स्थानमुत्तमम्। सुन्दरात्सुन्दरं शम्भो चानन्दामृतसागरम्
न क्षुत्पिपासे न ग्लानिर्नतृष्णा न जरादिकम्।तत्र स्थितानां सर्वेषां कैलासादपि सुन्दरम्

सृज विश्वेश दयया ममैवापारकौतुकम्। न सृष्टौ न विधात्रापि विष्णुना वा तथोत्तरम्॥
स्रष्टुं शक्यं त्वया देव मनसैव महेश्वर। त्वया हि भारते खण्डे सृष्टमानन्दकाननम्॥ १४॥
त्रिविष्टपञ्च वैकुण्ठं सत्यलोकमपि प्रभो। नार्हन्ति तुलनां यस्य लोका अपि चतुर्दश ॥
तत्र त्वं लिङ्गरूपेण विश्वेशाख्येन राजसे। अन्नपूर्णा सदैवाहं तत्र भक्तान्नदायिनी ॥
तत्रान्ते सर्वजन्तूनां मुक्तिं नित्यां प्रयच्छसि। लोकोत्तरं ते चरितं किं तवानुकृतिं सुराः
पामराःकल्पयिष्यन्तिनत्वष्टानमयोऽपिहि। तवान्यानिर्मितंशम्भोसाक्षात्कारणकारण
त्वयैवेदं जगज्जालं पुरा सृष्टं महेश्वर। रुद्राणां कोट्यश्शम्भो जरामरणवर्जिताः॥ १९॥
चन्द्रोत्तंसाः कपर्दोरुमौलयो भस्मभूषिताः। त्रिशूलोद्यत्करा देव तव लीलावलोकनैः॥
दिव्यन्तरिक्षपाताले तान्दृष्ट्वैव विधिर्भयात्। त्वाञ्च सम्प्रार्थयामास मा तेऽभूत्सृष्टिरीदृशी
तद्वाक्यानन्तरं शम्भोस्स्थाणुत्वं प्राप्तमीश्वर। त्वयैवोक्तो विधे सृष्टौ सृज त्वमशुभाःप्रजाः
जरामरणधर्मिण्यो नाहं स्रक्ष्येऽशुभाः प्रजाः। त्वं सर्वमङ्गलाकारस्तस्मात्स्थानवरं मम॥
लोकोत्तरं महादेव विहारश्चावयोस्सदा। सृजैवं मनसा देव मत्प्रियार्थं महेश्वर॥ २४॥
इतिदेव्यामहादेवःप्रार्थितस्सतदामुदा। जातहर्षस्स्वशीर्ष्णातामोमित्यान्दोलयन्मुदा॥
परमानन्दसन्दोहसागरान्तर्निमग्नधीः। क्षणं दध्यौ महादेवो लीलासृष्टिप्रवर्तकः॥२६॥
तत्क्षणाद्भास्वरं तेजस्समुत्तस्थौ सुधाम्बुधेः। कोटिभास्करसङ्काशं पार्वणेन्दुशताधिकं
विद्युत्कोटिप्रतीकाशमिन्द्रचापायुतोत्तरम्। वलक्षं भासिताकाशं ज्योतिर्मयमनुत्तमम् ॥
तत्प्रभाभासिता लोका भुवनानि चतुर्दश। ब्रह्मा विष्णुर्हरश्शक्रस्तथैव मरुतां गणाः॥
गन्धर्वा गरुडास्सिद्धास्तथैव च वराप्सराः। लोकपालास्तथा यक्षा ग्रहास्तारा मुनीश्वराः
अत्यन्तविस्मिताभीतास्तेपश्यन्तिस्वलोकगाः। किमेतदित्यहोकाण्डंतेजःपुञ्जंदुरासदं
देवानाञ्चासुराणाञ्च सर्वेषान्नो भयावहम्। पुरा सुरासुरैश्चैव मथितः क्षीरवारिधिः ॥
समुत्पन्नं कालकूटं देवानान्तु भयावहम्। तत्कीलादग्धसर्वाङ्गा महेशेन प्रसादिताः ॥
गरं भक्षयता तेन महेशेनामितात्मना। अन्धकोत्थमहाभीत्या शङ्करेणैव रक्षिताः ॥
त्रिपुराणां भयाच्चैव तेनेशेन विमोचिताः।वयं शरण्यं शरणमनुयास्याम शङ्करम्॥३५॥
इति ब्रह्मादयो देवा मेरुमौलौ स्थितास्तदा। कृताञ्जलिपुटास्सर्वे कैलासस्थं महेश्वरं
तुष्टुवुः परया भक्त्या ब्रह्मविष्णुहरामराः ॥ ३७ ॥

देवाः—

जय जय शङ्कर चन्द्रशेखर प्रमथाधीश्वर चारुचन्द्रचूड ।
जय जय निगमादिवन्द्यपादोज्ज्वलितानलफाललोचनाद्य नः ॥ ३८ ॥
जय जय गजचर्मशोभिताङ्ग जय जय विश्वविधान शूलपाणे ।
जय जय त्रिपुरान्तकेश शम्भो जय जय शान्त शशाङ्कचारुमौले ॥ ३९ ॥
जय जय तटिनीजटोत्तमाङ्ग जय काकोदरवीरहार शम्भो ।
गरकन्धर भूरुहोरुवास त्रिजगत्तापहराव्ययेश देव ॥ ४० ॥
जय जय जगदीश दीनबन्धो मधुवैरिप्रकटाक्षिपूज्यपाद ।
जय जय मारहरात्तशूलपाणे प्रमथाधीश्वर पाहि भीतितोऽद्य नः ॥ ४१ ॥
जय जय विबुधार्तिनाशहेतो जय जय भस्मविभूषणेषु तुष्ट ।
प्रसभं कष्टमपाकुरुष्व शम्भो गिरिजानाथ सनाथयाशु नः ॥ ४२ ॥

स्कन्दः—

इति विबुधजनोत्थघोषवर्गश्रवणापारसुखस्तवं महेशः ।
परिशुश्राव नगाधिपोरुमौलौ गिरिजामीक्ष्य तदन्तिकाञ्च दूतीम् ॥ ४३ ॥
समलोकयदाशु चारुदृष्ट्या हिमधामोत्तरया सुचारुचन्द्रचूडः ।
किमिदं प्रसभं स्तवोरुघोषं कथयाद्येति विचार्य नन्दिनं त्वम् ॥ ४४ ॥
द्रुतमायाहि सखीत्यवोचद्गिरिजाजानितदिङ्गितेक्षणेन ।
गिरिराजात्मजया तदाभ्यनुज्ञामधिवाप्यैव सखी ततो द्रुतं सा ॥ ४५ ॥
कैलासामलहीरसौधतलतो याता द्रुतं नन्दिनं
राजद्वारलसच्चलाचलगतिर्दिव्याङ्गरागोज्ज्वला ।
नत्वा शम्भुपदाम्बुजं च गिरिजां सा वैजयन्तीमिव
ज्योतिः क्लिन्नदिशां मुखोज्ज्वलयुता सा [2]वैजयन्ती सखी ॥ ४६ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे देवस्तवो नाम
अष्टमोऽध्यायः ॥ ८ ॥

१. लोचनावनः इति पाठः । २. राजयन्तीति पाठः ।

ईश्वरमेरुगमनं नाम नवमोऽध्यायः

स्कन्दः—

इति घोषं महच्छ्रुत्वा मेरुमूर्धनि शङ्करः। स्तुवतां देवसङ्घानामगजाजानिरीश्वरः॥
सखीं देव्यास्तदा देवः कटाक्षेणाकटाक्षयत्। सा जयन्ती तदा देवीं वीक्ष्य देवानुमोदिता
नत्वा द्रुतं समभ्यागात्कैलासे हीरसौधतः। पूर्वगोपुरभागाग्रसौधमध्यस्थितं द्विजाः॥
नन्दिकेशं महात्मानं भस्माभ्यक्तं सदैव हि। दिव्यत्रिपुण्ड्रविलसच्चन्द्रोज्वलकिरीटकम्॥
स्वर्णवेत्रलसद्धस्तं गणकोटिपरीवृतम्। सिंहासनस्थं वरदं जयन्ती तं ददर्श हि ॥५॥
तांदृष्ट्वानन्दिकेशोऽपिचाभ्युत्थायासनाद्द्रुतं। सम्पूज्यतांवैजयन्तींस्थानमानासनार्हणैः॥

समास्य तामथोवाच नन्दिकेशश्शिवासखीम् ॥

नन्दिकेशः—

कोऽयमभ्युदयः कालो जयन्ति तव दर्शनात्। चिराय भवतीं दृष्ट्वा तुष्टं मेऽद्य मनो भृशम्
विनष्टाशुभसङ्घोऽस्मि चाष्टमूर्तिप्रसादतः।को वाद्यावसरो देव्या देवस्याख्याहि मेऽधुना
किमाज्ञप्तं महेशेन देव्या वा तद्वदाद्य माम्। तत्साधयामि शिरसा मा ते कालात्ययस्सखि

ततो नन्दीश्वरं प्राह जयन्ती सा गणेश्वरम् ॥ १० ॥

जयन्ती—

महाकैलासमौलिस्थहीरागाराग्रसौधके। सर्वावासोऽपि भगवानध्यास्ते च सहाम्बया॥
देव्यास्स्थानवरश्चापि चिन्तितं क्षणमात्रतः। त्र्यक्षेण मनसा तस्माज्जातं तत्तेजसां गणम्
ततः किंवा मेरुमौलौ घोषस्समजनि द्रुतम्। तच्छ्रुत्वा देवदेवेशो मामपश्यच्छिवान्तिके
शिवयाज्ञापि च ततस्तत्रगन्तुं शिवस्य हि। रथोऽपि सज्जतामाशु यच्छीघ्रं ते गणेश्वर
किं चिरायसि देवाज्ञामविलम्बेन साधय। तदा जयन्तीत्वरया वचनान्नन्दिकेश्वरः॥
गणानाहूय तत्रस्थानपश्यद्देवतागणम्। स्तुवन्तं देवमीशानं तेजःपुञ्जेक्षणात्तदा॥१६॥
मेरुमौलिगतं तत्र विष्णुब्रह्मादिकं द्विज। भीत्या सम्भ्रान्तमत्यन्तं दृष्ट्वा तेजो दुरासदम्
पुनस्समागतास्तत्र गणपा नन्दिनोज्झिताः। प्रणम्य विनयोपेता नन्दिकेशाग्रतो गणाः

गणाः—

सुधाम्बुधेर्मध्यगतं तेजो दृष्ट्वा दुरासदम्। भीता देवगणास्सर्वे स्तुवन्ति परमेश्वरम् ॥

मेरुमौलौ सदा देवा बृहस्पतिपुरोगमाः। अन्ये न सन्ति तत्रैव पूर्वतस्त्वयि शासति॥
शिलादहृदयानन्द गणेश्वरवरोत्तम। रथोऽपि सज्जो देवस्य तच्छीघ्रं विनिवेद्यताम्॥
नन्दिकेशस्तदा प्राह जयन्तीं प्राञ्जलिस्तदा॥

नन्दिकेशः—

श्रुतं गणवरैरुक्तं यत्त्वयोक्तं तथैव हि। रथोऽपि सज्जो देवस्य गन्तुन्तत्र रुचिर्यदि॥
देवदेवस्य देव्याश्च निवेद्यानन्तरं कुरु। इत्युक्ता सा तदा तस्थौ नन्दिकेशानुमोदिता
ययौ द्रुतं सा सविधं शिवस्याम्बायुतस्य च। प्रणम्य सा शिवौ तत्र सिंहासनवराश्रितौ
प्राञ्जलिस्सा तदा प्राह जयन्ती परमेश्वरौ॥ २९॥

जयन्ती—

देवदेव जगन्नाथ नन्दिकेशान्मया श्रुतम्। देवानां भयमुत्पन्नं तेजःपुञ्जोद्गमेन च॥२६
स्तुवन्ति वेदघोषेण मेरुमूर्ध्नि स्थितास्सुराः।त्वां स्तव्यं स्तोत्रवर्यैश्च वेदसंस्तुतमीश्वरम्
रथोऽपि सज्जो भगवंस्तव गन्तुं मनो यदि। तच्छ्रुत्वा तां महादेवो रथकल्पनमुत्तमम्
विहितस्स्यन्दनस्सज्जस्त्वास्तु विजयोदयः। अष्टौ कण्ठीरवा यत्र यत्रोक्ष्णामष्टकं शुभम्
यत्रेभाः परिभान्त्यष्टौ यत्राष्टौ जविनो हयाः। मनस्संयमनं यत्र कशापाणिर्व्यवस्थितः
गङ्गायमुनयोश्चैषां चक्रे पवनदेवताः। सायम्प्रातर्मये चक्रे छत्रं ते हेममण्डले॥ ३१॥
तारावलिमया कीर्तिरह्नो या उपनायकाः। श्रुतयो मार्गदर्शिन्यस्स्मृतयो रथगुप्तयः॥
दक्षिणार्धदृढा यत्र सखा यत्रापि लक्षकाः। आसनं प्रणवो यत्र गायत्री चापि पीठभूः॥
साङ्गा व्याहृतयो यत्र शुभास्सोपानवीथिकाः। सूर्याचन्द्रमसौ यत्र सततं द्वाररक्षकौ॥
स्वासितं कण्ठमूहुश्च रथाश्च रथगुप्तयः। ध्वजदण्डो महामेरुः पताका भास्करप्रभाः॥
स्वयं वाग्देवता यत्र चलच्चामरधारिणी। लक्ष्मीश्च छत्रं सुश्वेतं हिमधामसमप्रभम्॥
आहूता इव चाजग्मुर्विश्वे भुवनवासिनः। देवाः कोट्यस्त्रयस्त्रिंशद्गणकोट्ययुतद्वयम्॥
नवकोट्यस्तु चामुण्डा भैरवाः कोटिसम्मिताः। रुद्रा एकादश विभो कोटयस्समुपागताः
कपर्दचन्द्रार्धधराश्शूलहस्तवरायुधाः। षडाननाः कुमाराश्च मयूरवरवाहनाः॥ ३९॥
वीरबाहुप्रभृतयो नवलक्षं सनातनाः। शक्तिहस्ता महाभागा बलिनोद्यद्वरायुधाः॥

रुद्राण्योनवकोट्योऽथचासिहस्तामहाबलाः। योगिन्यस्सप्तकोट्यस्ताआययुःपरशूकराः
पिचण्डिलो महातुण्डा विघ्नविघ्ना गजानना। द्विकोटयो महाभागाःपाशाङ्कुशसुपाणयः
नन्दिकेशानुगास्ते वै कोटयो गणपुङ्गवाः। भस्मगात्रास्त्रिपुण्ड्राङ्काश्शरकार्मुकपाणयः॥
चण्डीश्वरगणाःकोट्योगदाहस्तास्समागताः। वीरभद्रगणाःकोट्यःखड्गहस्तास्समागताः
तथाभृङ्गिगणाःकोट्यःखड्गहस्तादुरासदाः। यक्षेशानुचराःकोट्योदण्डहस्तामहाबलाः॥
षडशीतिसहस्राणि मुनयो ब्रह्मवादिनः। तावन्तोऽत्र समाजग्मुस्तावन्तो मृगमेधिनः॥
नागानां कोटयस्तिस्रः पातालतलवासिनाम्। दानवानाञ्च दैत्यानांद्वेद्वेकोटीशिवाधुना
गन्धर्वा नियुतान्यष्टौ कोट्यर्धं यक्षरक्षसाम्। विद्याधराणामयुतं नियुतञ्चाप्सरोद्वयम्।
गोमातरस्तथैवाष्टौ सहस्राणि सुपर्वणाम्। दशसाहस्रमुत्कृष्टं पक्षिणां बलशालिनाम्।
किन्नराणां तथा षष्ठिसहस्रं वाद्यशालिनाम्। शङ्खभेरीमृदङ्गानां दुन्दुभीडमरूयुताम्।
गन्धर्वकोटयोऽत्रैव वीणासक्तकरास्तथा। सागरास्सप्त सम्प्राप्ता नानारत्नोपदप्रदाः।
सरिताश्च सहस्राणि त्रीणि पञ्चायुतानि च। गिरयोऽष्टौ सहस्राणि कोटयोऽत्रवनस्पते
आजग्मुर्दिग्गजाश्चाष्टौ वेदास्साङ्गास्समागताः।ब्रह्मविष्ण्वादयो देवा रुद्रो वासव एव
तथैव द्वादशादित्या वसवोऽथाश्विसंयुताः। तवागमनमिच्छन्तः प्रार्थयन्ति महेश्वरम्॥

आरुह्य तद्रथवरं शिवया समेतो देवी मुदा गणगणैस्सुरसिद्धसङ्घैः।
देव्या सखीसुवचनेन ययौ सुधाब्धौ द्वीपं मणीन्द्रकलितं शशिधाममौलिः।

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे ईश्वरमेरुगमनं नाम
नवमोऽध्यायः॥ ९॥

---

## शिवागमनं नाम दशमोऽध्यायः

जैगीषव्यः—

इभवक्त्रानुज श्रीमन्क्रौञ्चपर्वतसूदन। कथं जगाम भगवान्कैलासाच्छङ्करालयात्॥
देव्याःप्रियंचिकीर्षुस्सन्सप्तद्वीपविलोकने। वदतन्महिमोदारंदिव्याख्यानं परंशुभम्
श्रोतुं वै देवदेवस्य चरित्रं परमाद्भुतम्। न हि तृप्यामि भगवन्त्सर्वं विस्तरतो वद॥

१. वैकुण्ठे इति पाठः कोशान्तरेषु दृश्यते तन्न साधुः।

तस्योदारवचश्श्रुत्वा शाम्भवस्य महात्मनः। अत्यन्तहृष्टवदनस्तारकारिरभाषत ॥४॥
स्कन्दः—
शृणु विप्रोत्तम श्रीमत्कैलासात्सुन्दरालयात्। जयन्तीवाक्यतुष्टात्मा शिपिविष्टो महेश्वरः
देव्या दत्तकरश्चापि रत्नपादुकपादभूः। कैलासवरसौधाच्च निर्गत्य गिरिजायुतः ॥६॥
अद्रीन्द्रसुतया साकं देवश्चोक्षेन्द्रमारुहत्। ककुदाभोगविस्तीर्णरत्नाकल्पविभूषितम् ॥
महाधर्ममहापादं रत्नघण्टाविभूषितम्। शृङ्गकोटितटीभास्वद्रत्नसन्मुकुटीयुतम् ॥ ८ ॥
तत्रान्तर्विलसत्फालचामरद्वयशोभितम्। सोमनन्दिमहानन्दिवाणरावणभृङ्गिभिः ॥
देव्या सर्वगणैस्सार्धं रुद्राणीकरचामरैः। रत्नव्यजनकैश्चैव गणैर्विधृतछत्रकैः ॥ १० ॥
उद्यच्छशाङ्कसदृशः पर्वोत्थपरिमण्डलैः। स्थूलमुक्तासरालम्बिगणेन्द्रधृतचामरैः ॥११
पद्मकान्तिविनिस्फूर्जद्वातपोताहताग्रकैः। तुहुण्डहुण्डचण्डीशनटभृङ्गिरिटैः पुरः ॥१२॥
वीरभद्रमहाभद्रकालाग्निवररुद्रकैः। शरकार्मुकनिस्त्रिंशनिषङ्गोद्यत्करैरपि ॥ १३ ॥
स्वमुखे विधृतापारस्वच्छादर्शगुणोज्वलः। कुमारगणपाद्यैश्च प्रणतोत्थापितस्तथा ॥
नन्दिकेशगणापारस्वर्णवेत्रप्रचालितैः। रुद्रैश्च योगिनीमुख्यैर्भैरवैर्डाकिनीगणैः॥१५॥
यक्षेन्द्रैर्विविधाकारैर्नानाशस्त्राग्रमण्डलैः। दण्डिमुण्डिधृतापारस्वर्णमद्दलकाहलैः ॥१६
सुशङ्खवरघोषैश्च निस्वनैः पटहोत्थितैः। गणहस्ताहतापारदुंन्दुभीभेरिघोषणैः ॥१७॥
कैलासशिखरोत्तुङ्गमौलिवर्हिंकृतारवैः। अनेकडिण्डिमापारमड्डुगोमुखजै रवैः ॥१८॥
काहलाग्रालम्बिताच्छचामराणाश्च कोटिभिः। गणेन्द्रजयघोषैश्च विनादितदिशामुखम्
कृष्णागरुमहासारधूपपात्रकरैर्गणैः। कर्पूरखण्डजोद्दामदीपपात्रकरैर्गणैः ॥ २० ॥
फलजालकरैरन्यैस्स्वर्णपात्रकरैर्गणैः। भूषणाभोगविधृतवरपात्रकरैर्गणैः ॥ २१ ॥
फलताम्बूलहस्तैश्च प्रणामाञ्जलिसत्करैः। भस्माधारकरैरन्यै रुद्राक्षवरहस्तकैः ॥२२॥
देवी सखीगणापारकृतनीराजनोत्सवा। जयन्त्याच्छधृतछत्रमोहनाननसुन्दरा ॥२३॥
वि[3]जयाकरसद्वीटीविधृतांशुनखोज्वला। ललन्त्या वीजितमरुच्चामरैरतिसुन्दरा॥२४॥
व्यजनैककरालम्बिभूषणोत्तमभूषया। पद्मया शोभिता पार्श्वे वाण्या धृतपताकया ॥२५
शच्याभृङ्गारकरया शुशुभे सा महेश्वरी। दिव्याङ्गनाप्सरोजालरुद्राणीकोटिभिर्वृता॥२६

१. तत्रालम्बिशरत्काल इति पाठः ।　　२. दुन्दुभीमेघघोषणैरिति पाठः ।
३. एतदादि सार्धैकोनसप्ततिश्लोकपर्यन्तमेकस्मिन्नेव कोशे दृश्यते ।

करकज्जलभूषादिपुण्यस्रग्गन्धधारिभिः। रत्नपादुकहस्ताश्च शरशूलवरायुधाः ॥ २७
नवयौवनदीप्ताङ्ग्यः कुम्भोद्यत्सुपयोधराः। वस्त्रपेटीधराश्चान्यास्तथा ताम्बूलवाहिनी
घुणत्पदकमञ्जीरकङ्कणावलनोज्वलाः। रत्नपीनारुणलसत्कौसुम्भवसनोज्वलाः ॥
दिव्याङ्गरागपुष्पोद्यत्कबराः कमलाननाः। सेवन्त्यः परितो देवीं नानासेवाविशारद
गणेशप्रमथाधीशा यक्षेन्द्रफणिभूषणाः। रुद्राश्चापिमहोदारकाकोदरधरास्तदा ॥३१
विबुद्धचन्द्रार्धधराः कपर्दवरशेखराः। भस्मभास्वन्महाकोपास्ते सर्वे ह्यहिमन्यवः॥३
शिवापाङ्गपरिस्पन्दसमकालजगद्बलिम्। गृह्णन्तो गणवीरास्ते महापरशुपाणयः॥३
शरकार्मुकनिस्त्रिंशकुठारशरपाणयः। खड्गहेतिकुठारोद्यत्कराः कवचिनस्तथा ॥३५
महाबला महोत्साहा नानावर्णबलोत्कटाः। केचिद्धरिहयापारमातङ्गवदना गणाः॥३
मयूरशुकभेरुण्डव्यालीशरभवक्त्रकाः। मार्जारकुक्कुटोलूकतरक्षुवृकवक्त्रकाः ॥ ३६
वातायूपमवक्त्राश्च कृशास्स्थूलाः पिचण्डिलाः। भेकवायसगोवक्त्रमहिषाजमुखास्तथ
मूषिकास्यास्तथाकेचिन्निर्मांसस्नायुवंधनाः।पारावतास्याश्चतथामहास्थूलाःपिचंडिल
रक्ता वलक्षाः कर्बूराःपीताश्च हरिता गणाः। कोकिलास्याश्शुकमुखाःकरालविकटानन
दंष्ट्राविवृतदशना लेलिहानास्तदोष्ठके। सृक्कणीक्ककणीनिर्यन्महाजिह्वोरुनासिकाः ॥
गणानां कोटयस्तत्र देवस्य पुरतो ययुः। रुद्राणीकरपुष्पैश्च लाजवर्षैर्महेश्वरः ॥ ४१।
कैलासमौलिप्राकारमध्यस्थास्तटितो यथा। विकिरन्ति तथा देव्यो मुक्तापुष्पैर्महेश्व
केचित्सुगन्धकर्पूरैःपाटीरसलिलैश्शिवम्। वर्षन्ति शैलमौलिस्था धारापात्रैस्सदाशि
वर्षासु मेघगणवद्रुद्राण्यो नवयौवनाः। पश्यन्त्स्वकैलासमहालिङ्गसौधोरुशृङ्गकम्॥
लिङ्गालयगणांश्चैव हीरकुम्भोरुभासुरम्। वृषेन्द्रश्च समारुह्य सिह्मासनवरं स्थितौ॥
रेजतुःप्रमथोदारैस्सह देवादरैस्सह। उदारैर्गणबृन्दैश्च रुद्राणीगणकोटिभिः ।। ४६
आरुह्य शाङ्करं दिव्यं रत्नघण्टालसद्गलम्। वामभागस्थया देव्या वृषाधिपतिकल्पिते
सिह्मासनवरे देवौ प्रभामण्डलशोभिते। छत्रापारच्छन्नमुखचामराकलिकालकः॥४
पताकसङ्घनिविडवायुघोषैकभासुरः। मुकुटेनावृतमुखश्शरच्चन्द्रांशुलाञ्छनः ॥ ४
दिव्याङ्गरागसुभगगन्धामोदितदिक्तटः। त्रिणेत्रविलसत्फालस्त्रिपुण्ड्रावलिभासुरः
तथालिनीलसुगतालम्बिरत्नोरुहारकः। कुण्डलीशफणारत्नरिङ्खत्सान्द्रोज्वलन्मुखः

मृगटङ्कवराभीतिवृत्तबाहुचतुष्टयः । रत्नमुक्ताफलापारमालाजालैकसुन्दरः ॥ ५२ ॥
दिव्याम्बरधरोभाभिःकटीतटविराजितः । रणन्मञ्जीरनिनदकाञ्चीकाञ्चितमध्यमः ॥
सुरासुरेन्द्रमुकुटरत्ननीराजिताङ्घ्रिकः । उद्यच्छशाङ्कधवलसुन्दरामलविग्रहः ॥ ५४ ॥
वामभागस्थया देव्या हरिन्मणिनिभाच्छया । विद्रुमाभरणछायाविरसाधरविम्बया ॥
कचवेणीधृतापाररत्नचूडामणिव्रजैः । तिलकोज्वलसद्वृत्तसोममण्डलवक्त्रया ॥ ५६ ॥
किरीटरत्नगणजधारातारेन्दुभूषया । सुमनामोदसुभगधम्मिल्लालकया तदा ॥ ५७ ॥
दिव्यकण्ठसरापारललत्पदकया तदा । रत्नग्रैवेयचिन्ताकललद्धारलताशतैः ॥ ५८ ॥
दिव्यशुक्रोदयाकारमुक्तानासोरुधारया । रत्नताटङ्कविलसत्कपोलतटभासया ॥ ५९ ॥
दिव्यबाहुलतालोलभूषितानेकभूषया । निचोलकीलितापारवरमुक्तासराश्रया ॥ ६० ॥
हस्तभ्राजन्नागवन्धरत्नवङ्किकया तदा । मणिवन्धघनभ्राजिरत्नकल्पैकभूषया ॥ ६१ ॥
कटीवसननीव्याढ्यरत्नकाञ्चीज्वलच्छ्रिया । पदमञ्जीरशिञ्जानरणदालक्तपादया ॥६२
सुरेन्द्रमुकुटीकोटिनमत्किणपदद्वया । नखामलसुरत्नाच्छवृत्तचन्द्रजितश्रिया ॥ ६३ ॥
देव्या युतो हि भगवानम्बिकापतिरीश्वरः । कैलासशिखराद्देवो ययौ वृषभकेतनः॥६४
देव्या प्रसीदेति तदा श्रीअञ्जल्या प्रार्थितो हरः।क्षणन्तत्र स्थितो मेरोर्मूर्ध्नि देवमुमाधवम्
दृष्ट्वा तादृक्षमीशानं महोक्षवरवाहनम् । त्र्यक्षं दक्षसुतायुक्तं मेरुमूर्ध्नि सुरासुराः ॥६६॥
मुनयो देवसङ्घाश्च दिक्पालास्समरुद्गणाः। ऋतवः पितरश्चैव मातरश्च ग्रहाश्च भाः॥६७
दण्डप्रणामाञ्जलिभिर्मुकुटीकोटिशोभितैः । जयेति च प्रसीदेति शिवे पाहीति ते सुराः॥
प्रणम्य वद्धाञ्जलयः क्षणन्तत्र स्थितेश्वरे । नन्दी विज्ञापयामास प्राञ्जलिर्विनयान्वितः
एष विष्णुरयं ब्रह्मा रुद्रोऽयश्च शतक्रतुः । सूर्यचन्द्राविमौ देव मरुतो वसवोऽश्विनौ ॥

आदित्याश्चैवदिक्पालास्सर्षिसङ्घास्सुरासुराः ।
वेदाश्चेमेऽपि चत्वारस्साङ्गोपनिषदोऽखिलाः ॥ ७१ ॥

गिरीन्द्राश्च ततो नद्यः प्रजानां पतयस्तथा । मनवो ग्रहमुख्याश्च ताराजालश्च कृत्स्नशः
प्रणाममुखरान्देव कृपादृष्ट्या विलोकय । त्वदालोकनमात्रेण सफलानमलान्कुरु ॥७३
इत्थं नन्दीश्वरवचो निशम्य करुणारसैः। आलोकयदथेशानो देवान्त्सप्रणयान् स्थितान्

जयया प्रार्थिता देवी देवानालोकयेति च ॥ ॥ ७४ ॥

शिवौ तदालोक्य सुरासुरव्रजं दृष्ट्वा प्रसादमुखरायितकोटिदृष्ट्या ।
वेदैस्तथोपनिषदां स्तुतदेवसङ्घैस्संवर्षितौ सुमनसा त्रिजगज्जनित्रौ ॥ ७९॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे शिवागमनन्नाम
दशमोऽध्यायः ॥ १० ॥

देवानुग्रहो नाम एकादशोऽध्यायः.

सूतः—

प्रणम्य श्रीमहादेवं कृताञ्जलिपुटास्सुराः। तुष्टुवुः प्रमथाधीशमम्बाधीशं जगद्गुरुम्॥१॥
वचनैस्सुप्रसन्नेन मनसा साम्बमीश्वरम् ॥ २ ॥

देवाः—

हर हर पुरहर वितर विमुक्तिं कुरुकुरु करुणां सुरजाले ।
शरणं भव भव शरणं भव भव कुरु करुणां शशिमौले ॥ ३ ॥
मुरहरनयनार्चितपद शङ्कर विधिहर यमहर शम्भो ।
शरणं भव........शशिमौले ॥ ४ ॥
परिहर घोरभवाम्बुधिदुःखं जनिनाशोद्यतमीश ।
शरणं भव........शशिमौले ॥ ५ ॥
निगमायिततुरगोत्तम शङ्कर हरिशर पुरहर शम्भो ।
शरणं भव........शशिमौले ॥ ६ ॥
करिवरहरिवरचर्मवसान सुरवरपोषक शम्भो ।
शरणं भव........शशिमौले ॥ ७ ॥
तरुणेन्दुद्युतिशोभित गङ्गामुकुटीजटतट शम्भो ।
शरणं भव........शशिमौले ॥ ८ ॥
अतिदर्पोद्धतयममदखण्डन पालितद्विजनृपपोत ।
शरणं भव........शशिमौले ॥ ९ ॥

देवानाञ्च स्तुतिं श्रुत्वा भगवानिन्दुभूषणः। उद्यत्सुधाकरज्योत्स्नाप्रकाशमुखसुन्द

प्राह तान्प्रमथाधीशो विष्णुब्रह्मेन्द्रपूर्वकान्। प्रणतान्दण्डवद्भूमौ देवदेवः कृपानिधिः ॥
प्रसार्य दक्षिणं हस्तं माभैष्टेति वदञ्छिवः। उत्तिष्ठतेति तानाह विनयानतकन्धरान्॥ १२

ईश्वरः—

तुष्टोऽहं भवतां स्तुत्या सुरेशा विष्णुपूर्वकाः। भवतां भयजालानि नाशयामि क्षणात्सुराः
मनागपि न चिन्ता वो कार्या क्वापि कदाचन। यूयं मदर्चका नित्यमनन्यशरणास्सुराः
भवद्भावहृतात्माहं भवत्सु परितोषकृत्। यात स्थानानि सदये मयि तिष्ठति शङ्करे ॥
विज्वरास्स्थ सदा देवा लोकपालास्सवासवाः। विधे सृज जगज्जालं सदेवासुरमानुषम्
विष्णो पालय देवांस्त्वं दैत्येभ्यस्सर्वदा हरे। मद्दत्तचक्रधाराभिस्सदैत्याजौ निपात्य तान
संहरान्ते जगज्जालं रुद्र शूलाग्रधारया। अन्योऽन्यसक्तमोहाश्च यूयं मद्वचनात्सुराः ॥
परस्परानुरक्ताश्च परस्परहिते रताः। त्रिविष्टपे वस त्वं हि वासवाथ सदा मुदा ॥ १९
देवैर्मरुद्भी ऋतुभिरश्विभ्यामादितेयकैः। स्वर्गिणां शाश्वतं भोगं ददस्व त्वं मदाज्ञया॥
वह्ने वह त्वं देवानां हव्यं कव्यं पितृष्वपि। मखेषु सोमन्देवानामाहूतो विप्रसत्तमैः ॥
तपन स्वकरोत्सारैः कुर्वन्नस्तमयोदयम्। विप्राणां कालकलने व्रज मातन्द्रितो भव ॥
सोम त्वं तु निशीथेषु स्वांशुभिः पोषयञ्जगत्। ओषधीषु रसं बिभ्रन्वस मासम्भ्रमो भव
वरुण त्वं सदा पाशैः पाशयन्पापिजालकम्। दैत्येन्द्रैस्संवस त्वं वै ह्यर्णवान्तर्जलेशयः॥
यम त्वं नारकान्सर्वान्दुःखपातेषु पातय। असिपत्रे कुम्भिपाके महारौरवकादिषु ॥
सन्तप्ताञ्छ्रान्तकालेषु तप्तभूमिविलुण्ठनैः। भस्मरुद्राक्षहीनाङ्गान् लिङ्गार्चनविवर्जितान
रुद्रपञ्चाक्षराद्युत्या वर्जितांस्तर्जितान्कुरु। माञ्च विष्ण्वादिभिस्साकं पूजकं मोहतो यम
ऊर्ध्वपुण्ड्राङ्कनधरं तप्तचक्रादिचिह्नितम्। सन्तापयाशु शनकैः पादैस्तप्तायसोद्भवैः ॥
तन्मुखं विष्टयापूर्य हृष्टो भव सदा यम। अशैवेष्वन्यपापेषु मा दयां कुरु सर्वदा॥२९॥
अशैवभवनं प्रोक्तं नरकालयमुत्कटम्। अशैवयातनार्थाय सृष्टस्त्वं सूर्यनन्दन ॥ ३० ॥
मा विलोकय ताञ्छैवान्भस्मरुद्राक्षचिह्नितान्। त्रिपुण्ड्रफालानमलान्रुद्राक्षवरकङ्कणान्
रुद्रसूक्तजपासक्तान्रुद्रलिङ्गार्चने रतान्। विल्वपत्रैः प्रदोषेषु सोमवारे त्रिसन्ध्यकम् ॥
अनन्यभावान्सततं पञ्चाक्षरजपादरान्। शिवक्षेत्रैकवसतीनन्यक्षेत्रपराङ्मुखान्॥ ३३॥

१. भोगेषु इति पाठः। २. सन्तप्ताश्चाद्यकालेषु इति पाठः।

मत्पुण्ड्रनिरताञ्छैवानन्यपुण्ड्रविवर्जितान्। अविमुक्ते पुण्डरीके रुद्रकोटौ महालये ॥
प्रभासे पुष्करे चैव रुद्रकोटौ प्रयागके। वृद्धाचलेऽरुणाद्रौ चाप्योङ्कारे भृगुतुङ्गके॥
त्रियम्बके गण्डकायां पुण्ये सोमेश्वरे तथा। श्रीशैले च कुरुक्षेत्रे पिण्डारककुरण्टके॥
नर्मदायां शर्मदायां तथैवामरकण्टके। गोकर्णे नैमिषारण्ये वदर्या कुब्जशैलके ॥३७
श्रीमद्दक्षिणकैलासेकाञ्च्यांमद्ध्यार्जुनेतथा। कुम्भघोणेऽथमायूरेश्वेतारण्येद्रुतिस्थले
जप्येशे जम्बुविपिने तृणावर्ते श्रुतीश्वरे। श्रीकण्ठे सह्यमौलौ च हालस्ये गन्धमादने
दक्षिणाम्भोनिधेः कोटौ तथा च श्रुतिकानने। कमलावसतौ चापि सह्यजापुण्यरोधसि
ये शिवक्षेत्रनिरतामद्भक्तास्संयता यम। अपि पापान्वितांश्चापि तान्विवर्जय वर्जय।
अन्त्यजावातथाशूद्रास्सङ्करावाद्विजाअपि। शैवा येऽद्यापितेसर्वेत्वयापूज्यास्सदायम।

गोघ्नान्कृतघ्नान्गरदान्पिशुनान्पारदारिकान्।
विश्वासघातकान्दुष्टान्द्विजनिन्दापरायणान् ॥ ४३ ॥

पञ्चपापोपपापौघैर्युतान्नित्यं प्रशासय। इत्युक्त्वा गिरिजाजानिः कुबेरं प्राह शङ्करः।
कुबेर त्वं निधीशानो मदाज्ञातोऽनुपालय। ईशानरुद्रवृन्दैस्त्वं दिव्यन्तरजभूचरैः॥
वसुरुद्रगणैस्सार्धं निहतारिस्सदैव हि। मत्सारूप्यमनुप्राप्तो मत्पदाम्बुजभक्तितः॥
ये शैवा नियतास्सर्वे त्वत्कैलासवरे स्थिताः। त्वया सहैव कल्पान्ते मामेष्यन्त्यपुनर्भवा
निर्ऋते नैर्ऋतगणैर्वस नित्यमनुद्धतः। वायो त्वं सर्वगस्साधुर्वस नित्यं स्वलोकगः।
ग्रहाः काव्योङ्गिरा भूजस्सौरिः केतुर्विधुन्तुदः। मदाज्ञयैव सततं दर्शयन्तश्चरैस्स्वकैः
शुभाशुभं हि सर्वेषां मदाज्ञावशतस्सदा। ऋक्षैस्संवत्सरगणैर्ध्रुवाधारा कृता मया ॥५
वसिष्ठो गौतमोऽत्रिश्च जमदग्निश्च काश्यपः। विश्वामित्रो भरद्वाजश्चैते सप्तर्षयो मम
शासनादेवराज्यस्य भ्रमन्तो मेरुमौलिगाः। हिताहितश्च जगतां कुर्वन्तोऽथ वसन्तु
वसवो यूयमायात प्रतिकल्पेषु सर्वशः। मदाज्ञया लोकसृष्टिं सृजध्वं नृपसत्तमान्॥५
शेषाशेषफणाजालैर्भुवो जालं वहन्वस। दिग्गजास्सरितश्शैलास्सागराश्चाप्सरोवराः
गन्धर्वाःकिन्नरायक्षास्सुपर्णास्सिद्धचारणाः। स्वस्वकालोचितांवृत्तिंवहन्तुमदनुग्रहात्
भूधरास्सिन्धुराश्चाष्टौ नद्यस्स्पन्दत शीघ्रतः।सागराश्चाप्यनुद्वेला ह्यगा यूयं गिरीश्वराः

इत्यनुग्राह्य तान्देवान्स जगाम वृषध्वजः ॥ ९७॥

ब्रह्मा विष्णुरथो महेश्वरपदन्नत्वाभियातास्सुखं
देवास्सर्षिगणा गिरीन्द्रजगणा हृष्टाष्टमूर्तेः पदम् ।
ध्यात्वा तद्धृतयाम्बुजे सुखयुताभूवन्ययुश्चापि ते
लोकान्त्स्वानगजापतिप्रकथितापारार्थसारादराः ॥ ५८ ॥
कुर्वन्तस्स्थितिमुत्तमाञ्चजगतो लोकेषु ते वै सुराः ॥ ५९ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे देवानुग्रहो नाम
एकादशोऽध्यायः ॥ ११ ॥

## मणिद्वीपवर्णनन्नाम द्वादशोऽध्यायः.

स्कन्दः—
गतेषु देवसङ्घेषु भगवान्भगनेत्रहा । देवो देवीसखीभिश्च गणेन्द्रैश्चाप्यनुव्रतः ॥ १ ॥
ततस्स्थानेषुचाप्यन्यान्गणान्रुद्रान्महेश्वरः । योगिनीभैरवांश्चापिडाकिनीश्चैवशाकिनीः
अनुज्ञाप्यप्रयातेच तत्स्थानेऽस्मिन्त्सदाशिवौ । प्रहृष्टौतौमहादेवौ महोक्षेन्द्रेणगामिनौ॥
उल्लोलतरकल्लोलसुधासागरतीरगम् । प्राप्यैतौ गणमुख्यैश्चाप्युक्षेन्द्रेणातिराजता ॥४॥
रजताद्रिनिभेनाच्छछायाधवलितेन च । मणिद्वीपं शिवौ यातौ कान्तिविद्योतदिङ्मुखम्
सुधाम्बुधेर्जलं तस्य जानुदघ्नं वृषस्य हि । गणेन्द्रैर्नन्दिमुख्यैश्च मया च गणपेन च ॥
जानुदघ्नोऽभवच्चाब्धिश्शङ्करस्य प्रसादतः । देव्यास्सखीगणानाञ्च त्रिणेत्रदययाद्विजाः
तद्द्वीपमीक्ष्य त्र्यक्षोऽपि देवी सापि महेश्वरी । गणाश्चाहं तथेशश्च देव्याश्चैव सखीगणम् ॥
द्वीपमध्यं तदा प्राप्य सर्वेषां विस्मयावहम् । विस्मयन्तीं तदा देवीं प्राह देवो वृषध्वजः॥
वृषारूढश्शिवापार्श्वस्सश्चरन्वृषभध्वजः । पश्य द्वीपमिदं भद्रे भद्रदं दर्शनेन च ॥ १० ॥
सुधासागरमध्यस्थं तत्कल्लोलाग्रघोषितम् । घर्घरैर्मारुतंरवै रम्योत्तुङ्गशिलातलम् ॥११
मणिजालैकपुलिनं मणिकान्तिशताधिकम् । बालभानुसहस्राभं चन्द्रकोटिप्रभाततम् ॥
उत्फुल्लपङ्कजाकारं पद्मरागसमानकम् । द्वीपकान्त्या च लोकाश्च सर्वे कान्ततराश्शिवे॥
नसूर्यचन्द्रौनोविद्युन्नाग्निर्नोतारकागणाः । एतस्यभासाकोट्यंशकोट्यंशेनापिनोसमाः

१. तद्द्वीपमैक्षदिति पाठः । २. सरागकमिति पाठः ।

क्वचिद्विद्रुमसङ्काशबिम्बकान्तिशताधिकम् । क्वचिन्मरकतच्छायं विद्युद्भानुसमच्छवि ॥१
मध्याह्नभानुकिरणसदृशं क्वचिदेव हि । सन्ध्यानिबिडरक्ताच्छरागविद्योदितं क्वचित् ॥
इन्द्रनीलमणिश्याममेघगर्भसमं क्वचित् । क्वचित्सिन्दूरमाणिक्यजपादाडिमवर्णकम् ॥
निष्टप्तहेमभासश्च पश्यतत्क्वचिदद्रिजे । विद्युत्कोटिमहाधारासारकान्तिततं क्वचित् ॥१८
प्रोज्वलद्वडवावह्निज्वालाजालविभासुरम् । पुष्परागमणिप्रोद्यत्त्विपापारं क्वचिच्छिवे॥
हीरसारमहागर्भधगद्धगितदिक्तटम् । गोमेदमेदगर्भाच्छं क्वचिद्वैडूर्यसप्रभम् ॥ २० ॥
वैडूर्यकान्तिसूत्रोत्थधारासारैकभासुरम् । रम्यमुक्तासुवृत्तोरुस्वच्छकान्त्यधिकं क्वचि
कुरुविन्दमणिच्छायाप्रभाततियुतं क्वचित् । चन्द्रोज्वलाच्छस्फटिकतलोत्थधवलं क्वचि
मिश्ररागयुतश्चापि कपोतकुलसप्रभम् । मयूरकण्ठवर्णाच्छतलविद्योदितं क्वचित् ॥२३
पञ्चाशल्लक्षमायामं द्वीपरत्नमिदं शिवे । पूर्वं क्रीडाविनोदाय कल्पितो मनसा मया ॥२४
सुधासागरजोत्तुङ्गतरङ्गस्पृष्टपीठभूः । नात्र देवा न गन्धर्वा न पिशाचा मरुद्गणाः ॥२५
गणेन्द्राः प्रमथेन्द्रा वा नाप्नुवन्त्यद्भुतं शिवे । पश्य रत्नगिरींश्चापि नानारत्नैकभासुरान्॥
नानारत्नगणात्यच्छवृक्षच्छायासुमौलिकम् । चन्दनैस्तिलकैस्सालैरशोकैः पारिजातकै
तगरैरगरैश्चैव कोविदारैस्सुरादनैः । देवदारुसुगन्धोद्यचन्दनास्पन्दिशृङ्गकम् ॥ २८ ॥
सालतालतमालैश्च कृतमालैश्च पिप्पलैः । तक्कोलाङ्कोलहिन्तालरसालपनसावृतम् ॥२९
प्रत्यग्रकेतकीफुल्लकुरन्दकुटजावृतम् । विभीतकहरीतक्यैर्नभ्रूकैस्सुकपित्थकैः ॥ ३० ॥
भल्लातकशमीभल्लशिग्रुपालोद्ध्रजाम्बवैः । मन्दारकर्णिकारैश्च दाडिमीनागकेसरैः ॥३१
खर्जूरसर्जसरसनागार्जुनशिलोद्ध्रकैः । श्रीविल्वामलकाद्यैश्च छत्राकैः कम्रकैङ्गुदैः ॥३२
कदम्बैश्चम्पकैः फुल्लैः पुन्नागैर्वकुलैर्धवैः । वदरैः खदिरैश्चैव तगरैः पाटलैस्तथा ॥३३
सीताफलै रामफलैर्घृतकीगणसुन्दरैः । करञ्जैः क्रकलैर्नीपैः काश्मीरालक्तशोभितम् ।
वंशोद्दाममहारावबनघर्घरमारुतम् । रत्नपत्रै रत्नफलै रत्नशुद्धैश्च गन्धितैः ॥ ३५ ॥
नृत्यन्मयूरसङ्घैश्च कपोतरणितोज्वलम् । नदद्दात्यूहसश्चारिसारसारावसुन्दरम् ॥ ३६
कोकिलाकाकलीलापशुकलापैकभासुरम् । कुररीरावसङ्कूजद्द्रुहामुखशतान्वितम् ॥ ३७

१. शिलीन्ध्रकैरिति पाठः ।

सुरम्यरमणीयाम्बुसरोवरशतावृतम् । तन्मध्यभागविलसत्फुल्लरक्तसुपङ्कजैः ॥ ३८ ॥
हल्लकोत्फुल्लसङ्घैश्चनीलोत्पलकुलैरपि । तद्गन्धवन्धसुभगमारुतामोदतीरकम् ॥ ३९ ॥
रत्नवालुकया छन्नं वृक्षछायासुखं शिवे । त्रिविष्टपे न वैकुण्ठे सत्यलोकेऽपि तादृशम् ॥
क्षणमात्रे मणिद्वीपसरस्तीरे[1] निवासिनीम् । रम्यसोपानपंक्तीभिर्मणिमण्टपपंक्तिभिः ॥
पर्यन्तवल्लीलोलाच्छपुष्पगुच्छविराजितः । तिर्यग्रत्नमहाभागवलभीवलयैरपि ॥ ४२ ॥
तत्रत्यगोपुरापारप्राकारैर्विततताम्बरैः । तत्राखण्डमणिस्तम्भतोरणोद्यत्प्रभारसैः ॥४३॥
तत्रैव पश्य शिखरं मणिद्वीपेश्वरस्य च । द्राक्षैलापिप्पलीमल्लीमुल्लीकुन्दाच्छवल्लिभिः ॥
चन्द्रिकाम्बिकापीतिसायंरागाच्छगुल्मकैः । रत्नवल्यो रत्नकाण्डा रत्नपुष्पफलावृताः॥
गिरिमौलिस्थितं लिङ्गं पश्य दिव्यमिदं शिवे । रम्योत्तममणिस्वच्छभूधराकारगोपुरम्
तत्रान्तर्गृहमध्यस्थं मण्टपोज्वलकान्तिभिः । नानासहस्रस्तम्भोत्थमण्टपावलिभासुरम्॥
रुद्रावतारचरितं वृषगोपुरकुम्भकम् । प्राकारवरसंयुक्तं मणिमाणिक्यभूषितम् ॥ ४८॥
नानावृक्षगणोद्भासिभासितामलदिक्तटम् । हरिन्मणिनिभं क्वापि हीरसारैकभासुरम् ॥
इन्द्रनीलकगोमेदपुष्परागविदूरकैः । प्रवालपद्मरागोत्थकुरुविन्दमणिप्रभम् ॥ ५० ॥
नानाकारमिदं भाति कान्तिकाञ्चितपर्वतम् । अत्र लिङ्गमिदं पश्य रत्नगर्भगृहान्तरे ॥
लिङ्गं भुजङ्गाभरणं बिल्वपल्लवपूजितम् । आलेपितापीठतलं कर्पूरवरचन्दनैः ॥५२॥
धूपितं तगरामोदैर्मणिद्वीपोद्यतं सदा । स्नापितं तन्महेशानि सुधासागरवारिभिः ॥५३
लिङ्गस्याश्रयणादेव द्वीपोऽयं पावनो मतः । एहि पश्याव तल्लिङ्गं पूजयाव च शैलजे ॥
इत्युक्त्वागिरिजोत्फुल्लपङ्कजामलसुन्दरम् । हस्तमालम्ब्यभगवान्पश्यन्त्रत्नगिरिंशिवाम्
प्रदर्शयन्परां प्रीतिमवाप शशिशेखरः ॥ ५६ ॥

ईश्वरः—

पश्येन्द्रनीलमणिकल्पितचारुशुण्डादण्डाविराजितगजाः परितो भ्रमन्ति ।
आलूनशाखिवरमुक्तभुजाभिरामा रम्ये गिरौ करिवराः करिणीयुताश्च॥५७
उत्पुच्छचामरमिदं मृगयूथमेतदुड्डीनमेणिकुलपोतमुखाभिरामम् ।
दूर्वाङ्कुरोद्धृतमुखं परिपश्यतीदं शार्दूलरावघनभीतियुतं गिरीन्द्रे ॥ ५८ ॥

[1] निवासिनामिति पाठः ।

नृत्यन्ति रत्नगिरिमौलिकलाकलापिजालैकपक्षहतिनृत्तशिखण्डिसङ्घैः ।
कोकाः कपोतककुलं मणिपादमीशे पुंस्कोकिलाकुलमिदं वरहंसजालम् ॥५९
गवां गणं पश्य नगेन्द्रमौलौ स्वोधोभरेण महता पयसोरुधारम् ।
वत्सानुगं गिरितटे तृणतृप्तमीशे धावद्गजेन्द्रहरिणी परिधावतीदम् ॥ ६० ॥
सिंहारवोद्बोधितसिन्धुरेन्द्रा धावत्कुरङ्गनिकरैर्वनवातपोतैः ।
उत्पुच्छचामरसुखङ्गलुलायशृङ्गलीलाछटारवविभिन्नगुहादिवक्त्रम् ॥ ६१ ॥
कस्तूरीमृगनाभिघर्षणमहावृक्षादिगन्धायितं
रम्योद्दामसुपुण्यशेखरतरूद्दामैश्च सद्गुच्छकैः ।
उत्फुल्लोत्तमकेतकीगतरजोद्धूलीयुतो वातकः
पुष्णात्यङ्गमिदं मदीयमगजे पश्याधुना शैलकम् ॥ ६२ ॥
मुस्तामेडनकोलदंष्ट्रविवृता रत्नाच्छस्वच्छोपला-
धस्तादुत्थितसत्फणीन्द्रफणजैः रत्नोज्ज्वलत्कान्तिभिः ।
युक्तं चित्रविचित्ररत्नजमहासारोपलं सुन्दरं
रत्नाद्रिं परिपश्य देवि सुभगे सम्पूजयावो हरम् ॥ ६३ ॥

स्कन्दः—

इत्यम्बाकरपङ्कजे स्वकरजाङ्गुष्ठेन तुष्टश्शिवो
दृष्ट्वालिङ्गमहो द्विजाः करतलैस्स्पृष्ट्वाद्रिकन्यायुतः ।
संसिच्यामलकुम्भसम्भवसुधाधाराभिरेवेश्वरः
क्षीराज्यामृतशर्करामधुरसैर्दध्ना फलानां रसैः ॥ ६४ ॥
गन्धाम्बुप्रतिवासितैश्च कलशैस्संवेष्ट्य वासोभरै-
रालिङ्ग्यामलगन्धसान्द्ररसैः पाटीरकर्पूरजैः ।
बिल्वीपल्लवकोटिचम्पकमहामल्लीभवैः पङ्कजै-
र्मन्दारैः करवीरपद्मजमहामालादिभिश्चाम्बिका ॥ ६५ ॥
युक्तैर्धूपविधूपनैस्तगरजैर्दीपैर्मणिप्रोद्यतै-
रन्नानां परिकल्पितोत्तममहासूपाज्यभक्ष्यैरपि ।

रम्यानेकसुगन्धिशाकफलजैस्ताम्बूलजालैश्शिवो
नैवेद्यामलपात्रकोटिवरकैर्दीपैस्सहस्रोज्वलैः ॥ ६६ ॥
नीराज्य प्रमथादिसुन्दरमहावाद्यारवैश्शङ्कर-
स्स्वच्छत्रामलपंक्तिचामरगणैः प्रोद्यत्पताकागणैः ।
आदर्शैश्च शिवासखीकृतमहानाट्यैस्तदा शङ्कर-
स्सम्पूज्यामलरत्नसौधविलसद्रत्नप्रभाभासुरम् ॥ ६७ ॥
दृष्ट्वा लिङ्गमुमायुतोऽत्र भगवानास्ते च सिंहासने
तन्नैवेद्यरसानुमोदितमनाश्चान्यान् गणेशान् ग्रहम् ।
विघ्नाद्रिप्रशमश्च भोजयदुमां स्वस्यानुरागं गणं
तन्नैवेद्यसुधारसैर्गिरिजया दत्तैश्च तुष्टा गणाः ॥ ६८ ॥
विघ्नेशोऽप्यहमप्यथेश्वरपदध्यानानुरक्तोऽभवं
देव्या चापि महेश्वरस्त्रिजगतां नाथो मुदा तत्र वै ।
द्वीपेशस्य निजालये गिरिजया भोगान्प्रियान्भोजिन-
स्तत्प्रासादमहोरुसारशिखरे मञ्चे पराध्यास्तृते ॥ ६९ ॥
शिश्ये शैलसुतासहायसुसखीयुक्तो गणेन्द्रैरपि
द्युद्यत्कान्तिमणिप्रभाविनिहितस्तोमे तमोराशिनाम् ।
चन्द्रासारकरैश्च चन्दनमहापुष्पैकभूभासुखम् ॥ ७० ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे मणिद्वीपवर्णनन्नाम
द्वादशोऽध्यायः ॥ १२ ॥

---

## मणिद्वीपवर्णनन्नाम त्रयोदशोऽध्यायः.

ईश्वरः—

पश्य देवद्रुमापारवनवाटीं महेश्वरि । विकचत्पुष्पशबलं बालादित्यसमप्रभम् ॥ १ ॥
प्रवालमालावितत्तं मणिसुन्दरवेदिकम् । सन्नद्धकैस्समुत्फुल्लै रत्नोद्यत्कान्तिसुन्दरैः ॥

१. मनस्त्वांगो गणेशान् गुहमिति पाठः ।

फलभाराव्रतापाररम्यदेवद्रुमैर्युतम् । सौन्दर्यधारासर्वस्वकुसुमामोदमोदितम् ॥ ३ ॥
रत्नालवालमध्यस्थसुधासागरनीरकैः । पादपानां कुलं भद्रे तरुणारुणपल्लवम् ॥ ४ ॥
उद्यदिन्दुकरस्पर्शिप्रवालवरकाञ्चितम्। देवमन्दारकैः फुल्लैः पर्वोद्यच्छशिसप्रभैः॥५॥
रत्नपत्रफलैश्चैव कुसुमामोदिदिक्तटैः । मन्दारसुन्दरापाररसैर्गन्धायिता दिशः ॥६॥
प्रवाललतिैः पत्रैः पल्लवैरतिसुन्दरैः । तत्पुष्पगन्धमधुरमरुद्रजफलैस्तलैः ॥ ७ ॥
पटवाससुविस्तीर्णभूभाग इव लक्ष्यते । भान्ति मन्दारतरवो ह्यभ्रङ्कषशिखोद्यतैः॥८॥
पारिजातकुलं पश्य हारिताखिलहृत्तमम् । प्रवालकाण्डविलसत्सुमगुच्छविराजितम्॥
तद्गन्धबन्धुरामोदरम्यगन्धवहाहृतम् । शारदाभ्रघनप्रख्यं विकासितदिशामुखम्॥१०
स्वच्छस्फटिकधारेव नयनानन्ददायकम् । कामदं सोमसङ्काशं मनसस्तुष्टिदायकम्॥
विहारहारशयनरम्यरत्नाच्छवालुकम् । चित्रवेदिकजालैश्च फुल्लपल्लवशोभितम् ॥१२॥
तत्पुष्पगुच्छसरसकेसरायितभूतलम् । तत्फलैर्विवृताल्यच्छगलन्मधुझरीभरैः ॥ १३ ॥
सर्वकामदमुत्पुष्पं कामानामपि कामदम् । चिन्तामणिवरोत्तुङ्गरम्यप्राकारमध्यगम्।
एहि तद्वनमुत्कृष्टं पश्यावः कमलेक्षणे ॥

स्कन्दः—

इत्युक्त्वातौ शिवौतत्र रम्यरत्नाच्छपादुके। पादाब्जेचारुसंयोज्य जयन्त्यानीतके तद
हस्तेन देव्या हस्तं स्वं संयोज्य परमेश्वरः । ययौ गिरिजया मन्दमङ्गरागेण शोभितौ।
स्वाङ्गकान्तिजितापारसुरत्नगणकोटिकौ । स्वच्छरत्नवरासारदेव्यङ्गहृतसुप्रभः ॥१७॥
मणिद्वीपः क्वचिद्भाति शर्वाङ्गसितकान्तिभिः । कल्पवृक्षवनापारवृक्षजालं महेश्वरः ॥
वनानां पतिरीशानो दर्शयामास तां शिवाम् ॥ १९ ॥

ईश्वरः—

पश्य कल्पवनं भद्रे भद्रन्तव निरीक्षणम् । त्वदपाङ्गैकसङ्गेन नयनानन्ददं शिवे॥२०॥
सुरत्नमणिधाराच्छवेदिकं मणिवालुकम् । हल्लकोत्थसरासारमध्यपर्यन्तमारुतम् ॥
रत्नकान्तियुतोत्फुल्लरत्नपङ्कजसुन्दरम् । मणिमण्टपमेतद्वै चित्रविद्रुमपुत्रिकम् ॥२२॥

१. भरैरिति पाठः । २. अत्यच्छमिति पाठः ।
३. ययौ मन्दं मन्दरागौ शोभितौ स्वांगकान्तिभिरिति, ययौ मन्दं महादेव्याप्यंगरागैक शो भिताविति च पाठः ।
४. हततापितः इति पाठः ।

मणिसोपानसम्बद्धसरोराशिसमावृतम् । सिह्मासनवरैः क्लृप्तं धूपितं मणिदीपकम् ॥
कल्पकोत्थसुमासारगन्धायितसुमारुतम् । हेरित्स्तम्भशतोपेतं सरोन्तर्मण्टपं शिवे ॥
तद्धीरसारगर्भोत्थकान्तिकान्तजलावृतम् । तत्तरङ्गप्रतिछायबिम्बिताखिलमण्टपम् ॥
तत्राहं सुखमातिष्ठे त्वया सह सुमध्यमे ॥ २६ ॥

स्कन्दः—

इति तत्राविशद्देव्या तत्सरोगणसंवृतः । कल्पकाक्लृप्तसुमनोराशयोऽभूषयच्छिवाम्॥२७
कस्तूरीरससम्मिश्रपाटीरद्रवचन्दनैः । देव्यङ्गमालेपितवान् स्वाङ्गमप्यथ शङ्करः॥२८
धूपवर्तिसहस्रौघरत्नवृक्षाग्रधूपकैः । मणिद्वीपमहावृक्षैर्दिदीपे मण्टपं हि तत् ॥ २९ ॥
तद्धूपराशिमाणिक्यजालोद्यद्भासितान्तरे । रत्नमण्डलसत्पादमहाहीराच्छकल्पिते॥३०
परार्ध्यास्तरणोपेते कल्पपुष्पसरावृते । निषण्णश्शिवया देवस्तत्फलान्यथ भक्षयन् ॥
सुधावधीरणरससुरसामोदमेदुरैः । फलैरगात्ततस्तृप्तिं देव्या देवो महेश्वरः ॥ ३२ ॥
नित्यतृप्तोऽपि भगवानम्बिकापतिरीश्वरः । तत्रैव यापयामास दिवसं देवमानतः ॥
विहरन्त्स हरो देव्या विस्मितान्तरया दृशा । देवी तदा महादेवं प्राह पङ्कजलोचना॥

देवी—

त्रिणेत्र जगदाधारबन्धुरामलविग्रह । न कैलासे नलोकेषु क्वापि दृष्टेदृशी स्थितिः ॥
मणिद्वीपे यादृशी मे परा तृप्तिर्महेश्वर । मणिद्वीपेश्वरस्यास्य रत्नौघनगवासिनः॥३६॥
प्राकारगोपुरोत्तुङ्गरचना महदद्भुता । लिङ्गं विचित्रमणिजं नानाकान्तिजभासुरम् ॥
भुजङ्गभोगाभरणं कण्ठेनीलमणिप्रभम् । तत्फणावृतसन्मौलिदर्शनात्सर्वकामदम्॥३८
तद्रत्नशिखरोद्भासिवृषभावलिशोभितम् । विस्मयानां स्मयकरं सौन्दर्यादपि सुन्दरम्॥
रम्यं विहारसदनं त्वया मे कल्पितं शिव । परमानन्ददे मेऽद्य यथात्वद्दर्शने मम॥४०
तथैवायं मणिद्वीपश्श्रेऽयं कल्पकवाटिका ॥

स्कन्दः—

इति देव्या वचश्श्रुत्वा ततोऽन्तर्वरगर्भकम्। मणिजालयुतोत्तुङ्गप्राकारान्तःप्रकल्पितम्
नीपानोकहकादम्बवनराजिविराजितम् । चिन्तामणिमणीक्लृप्तसौधायुतविराजितम्॥
सुरम्यतन्मणिस्तम्भमुत्कीर्णोद्यत्सुपीठकम् । शाणोल्लीढमणिव्रातचाकचक्यैकभासुरम्

१. हीरस्तम्भ इति पाठः ।
२. राशिभिर्भूषयच्छिवामिति पाठः ।

नीपोपवनसौन्दर्यं दर्शयामास विश्वपः ॥ ४४ ॥

ईश्वरः—

एतन्नीपकुलं प्रफुल्लसुमनापाराच्छगन्धावृतं
नेत्रानन्दकरं सदैव विततं चाम्लानवर्जं शिवे ।
दिव्योत्तुङ्गतरङ्गरङ्गजसुधासिन्धोर्जलैस्सिक्तम-
प्यत्यन्तं मणिजालकान्तिततिभिः प्रोद्यच्छिखं सुन्दरम् ॥ ४५ ॥
रत्नोद्यन्मणिवेदिकाशतयुतं धारागृहैश्शोभितं
वर्हाक्रीडनबर्हिकोकिलमहाहंसालिपालीततम् ।
कापोतावलिलीलया सुमधुरारावै रणच्छिञ्जिनी
मञ्जीरध्वनिपादपङ्कजमुमे तत्र त्वया न्यस्यताम् ॥ ४६ ॥

स्कन्दः—

इत्युक्त्वा जगदम्बया त्रिजगतान्नाथश्शशीशेखरो
दृष्ट्वा नीपवनं ससुन्दरमहापुष्पाच्छगुच्छावृतम् ।
तद्वातैरतिसुन्दरोत्तममहाशीतर्धिसाराकरै-
र्गन्धानन्दितघ्राणतर्पितमरुज्जालैर्विशालैरपि ॥ ४७ ॥
देव्या नीपवनं विलोक्य सदयं चातिष्ठदीशायुतो
रम्ये तन्मणिवेदिकास्तृतमणीमञ्चे जगन्नायकः ॥ ४८ ॥

ईश्वरः—

नीपानां कुलमेतदद्य गिरिजेऽप्यत्यन्तपापापहं
गोपायन्तमितैनसः प्रतिदिनं त्वद्भक्तियुक्ता उमे ।
वेपन्तः पवनालिसारचलनैः पुष्पैरहीनश्च य-
द्भूपोद्यन्मधुगन्धसारसुभगं पश्याद्य मोदास्पदम् ॥ ४९ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे मणिद्वीपवर्णनन्नाम
त्रयोदशोऽध्यायः ॥ १३ ॥

---

१. मुने इति पाठः । २. कोपैर्विहीनाश्चये इति पाठः ।

## श्रीचक्रसौधवर्णनन्नाम चतुर्दशोऽध्यायः.

स्कन्दः—

मञ्चेषु देवौ हि तदा चिक्रीडतुरहो द्विजाः । शम्भोस्तत्रैव वसतिः कृतानीपवने तदा ॥
नीपशाखालम्बितोद्यच्छृङ्खलामञ्चके शिवौ । नगराजाङ्गसम्भूता तत्रस्था प्राह शङ्करम् ॥
४५ ॥ श्लथद्धम्मिल्लमल्लीनां सरालिकलिकाभरैः । चन्दनालेपसुभगगात्रेणालिङ्ग्य शङ्करम् ॥
नयनाञ्जनचिह्नोद्यत्कपोलतटसुन्दरम् । स्वकुचागाढमृदितकुङ्कुमाङ्कितवक्षसम् ॥ ४ ॥
विधूतविम्वसाम्राज्यमधरं सा महेशितुः । वारुणीदिक्समाक्रान्तप्रातश्शशिसमत्विषम् ॥
चुम्वनालिङ्गनप्रौढरसानन्दोल्लसा शिवा । प्राह तं देवदेवेशं प्राञ्जलिर्गिरिजा तदा ॥

गिरिजा—

देवदेव महादेव शरणागतवत्सल । महेश्वर तपोराशिदयाराशीश शङ्कर ॥ ७ ॥
इन्दुधामसमानास्य वालेन्दुकृतशेखर । अश्यामि द्वीपमध्यस्थं त्वया चिन्तामणीचितम्
महारत्नवरोत्तुङ्गसौधान्तर्गृहमीश्वर ॥ ८ ॥

स्कन्दः—

इत्युक्तं तद्वचो देव्या[1]शिवश्श्रुत्वा महेश्वरः । शिवेस्वहृदयाकारसन्धितौघविचित्रितम्
उत्कीर्णरत्नजालेभ्यः प्रभाधिकविनिर्मितम् । देव्यै तद्दर्शयामास विश्वात्मा विश्वभावनः
चेष्टितं तस्य को वेद वेदवेद्यस्य चेशितुः । मनागिति च जानेऽहं तच्चेष्टितमिदं जगत् ॥
अधिष्ठिताश्च यास्यामस्तदधिष्ठानचेष्टितम् । अपूर्वं यन्मया दृष्टं तदाख्यामि च तच्छृणु
तन्मे देव्या महादेवो निरगाद्दुरितान्तकः । तन्नीपवनमध्यस्थं सिह्मासनवरं तदा ॥ १३

ईश्वरः—

तद्दर्शयामास देव्यै दिव्यचिन्तामणीचितम् । सौधराजोत्तमं देवश्श्रीचक्राकारसुन्दरम्
चिन्तामणिसमूहानां ज्योतिःप्रान्ततराम्वरम् । चक्रकोणविवृत्तोद्यन्मणितोरणपालिभिः
वलभीसुन्दराकारस्तम्भकुम्भोज्वलोच्छ्रयं । सौधाग्रविविधोच्छ्रायमणीकलशदिङ्मुखम्
जयन्तीवैजयन्तीनांनिकरैस्त्रिदिवस्स्थलीम् । महासिद्ध्यष्टकस्यापि क्रीडाभुवनमुत्तमम्
वृत्तकल्पद्रुमवनं नीपैः फलकुलावनैः । पर्यन्तकलितापारआलवालमणिद्युति ॥ १८ ॥

1. शिवश्शम्भुर्महेश्वरः इति पाठः ।

प्रासादेषु प्रतोलीषु प्राकाराग्रे गृहाङ्गणे । गोपुरेषु विचित्रेषु कवाटेषु तटेष्वपि॥
मणिमाणिक्यरत्नानामुच्चलच्चारुरोचिषाम् । ज्योतिर्जालैर्जटिलितं शिवेदमवलोक्यता
द्यावाभूम्योरन्तराले लोकजाले तथा भुवि । विष्णुब्रह्मेशभवने दिक्पालानां पुरे
नागानामपि लोकेषु दैत्येन्द्राणां पुरेष्वपि । कैलासे वा महादेवि चिन्तामणिगृहादि
ईदृक्सम्पत्तिसम्भारो न कुत्र भुवनेश्वरि । उद्यत्कान्तिमहासौधमणिरञ्जितपीठभूः
चारुचित्रविचित्राढ्यचिन्तामणिगणद्युतिः । भास्वरं सुमनोद्दामकल्पकानां भरैरपि
नीपव्रातमहागन्धवातसुन्दरदर्पितम् । धूपधूमामृतासारमणिदीपायुतोज्वलम् ॥२
सुरम्यहर्म्यं पश्याद्य लोचनानां त्विषा मुखम् । मनस्सर्वस्वरचितं मया तव कृतं
मणिजालकसच्छिद्रतरलोदारकान्तिभिः । दिङ्मोहजनकञ्चैव दर्पणोदरसुन्दरम् ॥
हीरसारघनापारतलोल्लसितदिक्तटम् । विचित्रसूत्रवैडूर्यरञ्जिधाराकुलाकुलम् ॥२
गोमेदगर्भमेदोग्रचारुभित्तिविभूषितम् । पुष्पलगमणिज्योतिस्स्तम्भविद्रुमपुत्रिकम्
महेन्द्रनीलसङ्कसस्तम्भपीठोज्वलत्पदम् । प्रवाललतिकालोलोज्वलत्तलकलाकुलम् ।
मुक्तागुच्छसरापारलम्बितोत्तमपीठकम् । वलभीकुलजालम्बिनानारागसमावृतम् ।
महामाणिक्यवलभीनिर्यत्कान्तिवृता दिशः । आताम्रा इवराजन्ते साम्यंसाम्यं सुधा
यत्रातिमितत्तेजोभिश्शलाकाभिर्विचित्रितम् । गवाक्षितं पक्षिगणैः पालीपालिमरालकैः
सिह्माक्रांतगजप्रोद्यच्छुण्डादण्डातिकीलितैः । शार्दूलमुखवृत्तास्यघोणाचुम्बितनासि
मरालराजमुखगमुक्तासक्तलतावृतैः । कपोतपालीमणिजारक्तपादाङ्कभासुरैः ॥३५
मयूरपक्षसन्दक्षमयूरवरपद्धतैः । विस्तृतालम्बिपिञ्छाग्रभरसारककल्पितैः ॥ ३६ ।
हंसालिस्कन्धमध्यस्थरत्नसौधालिकातते । उद्वहन्तश्श्रमोद्भ्रान्तनयनानन्दसुन्दरम् ।
भुजाभ्यांपीनवृत्ताभ्यांकल्पितामणिपूरुषाः । सिह्मास्यतिर्यग्दंष्ट्राग्रजिह्वानिर्यत्सुता
मनसा हि ममापारमणीनां कल्पिताम्बिके । पश्याधुना मणिमयैः पुरुषैर्धृतचामरैः ।
केलिलीलाविचलनैःपुत्तल्यो व्यजनीकराः । सेवन्ति त्वां महादेवि स्वजाड्यविनिवृत्त
यन्त्रासारभ्रमद्वाररथाकृतिगृहं शिवे । धूयमानपताकञ्च तुरङ्गावलिशोभितम् ॥ ४१
वहन्तिश्रीयुतं यस्मिंस्तुरङ्गाः कामवेगिनः । प्रोच्चलन्त इवाभान्ति दिव्यं रथगृहं शिवे

१. नयेमेमं महापारमणिना कल्पितांबिके इति पाठः ।

सिह्मप्रणादयुतमत्युदारं केसरीगणैः । सहस्रं धवलापारसटाशोभितकन्धरैः ॥ ४३ ॥
वहन्ति [1]धूतग्रहणे मणिजालयुतस्य च । गजसौधमिमं पश्य दिव्यसिन्धूरमूर्धगम्॥ ४४
चलदत्युग्रदण्डोत्थमणीक्षुवरहर्षितम् । विधृतोत्तुङ्गकुम्भस्थदिव्यपीठमणिद्युति ॥४५
इन्द्रनीलमयैः कूष्टैर्गजैः पश्याम्बिके तव ॥ ४६ ॥

स्कन्दः—

इत्युक्त्वा गिरिराजराजतनयामानन्दयञ्छङ्करो
दिव्यापारमणिद्युतिप्रविलसन्मौलिस्थकुम्भोज्वलान् ।
प्रासादान्विविधानकृत्रिममहाचित्रस्य विश्वेशितु-
श्चित्रे कल्पितसज्जकैरनुदिनं तुष्टाष्टमूर्तिं शिवाम् ॥ ४७ ॥
स्वोत्फुल्लामलपङ्कजोत्तमकरैरालिङ्ग्यहृष्टान्तरा
धारासारगृहेषु कालमनयत्कालातिगस्येशितुः ।
पर्यङ्काङ्कगतिप्रचारविहितापारानुसारादरा
देवी सा परमेश्वरस्य ललितं पादाम्बुजं सेवती ॥ ४८ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे श्रीचक्रसौधवर्णनन्नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

## चिन्तामणिसौधवर्णनन्नाम पञ्चदशोऽध्यायः.

ईश्वरः—

पश्य देवि महामश्वं पुष्पसारच्छदावृतम् । हिरण्यानर्घ्यै[2]रत्नाढ्यमहाकशिपुशोभितम्॥१॥
सौधोद्यतपताकाभिरुद्यच्छशिशतायुतम् । पुष्पच्छदपटप्रान्तलोलालम्बितमौक्तिकम्॥
रत्नजालिकयालोलललत्कान्तितते गृहे । सुगन्धगन्धबहुलं घ्राणतर्पणमुत्तमम् ॥ ३ ॥
चिन्तामणिवरोत्तुङ्गसौधमध्यावलम्बितम् । मणिशृङ्खलिकाकीलजालिकाललितोत्तमम्
लम्बमानझणारावविताननजनिताम्बरम् । वितानालम्बिसहजगुच्छामुक्तासरावृतम्॥ ५

१. धूतमसृणमणीति पाठः ।
२. वज्राढ्य इति पाठः ।

मणिजालवरालम्बिवातपोतचलद्द्युतिः । अर्चाभिश्चार्चितन्तत्रवितानस्वरलम्बिभिः
उद्यदिन्दुसुधाचुम्बिधवलिम्ना युताधिकम् । दिव्यचिन्तामणिगृहं सुबन्धुररसोल्क
मणिभृङ्गारजात्यच्छसुधापूरैः प्रपूरितम् । कर्पूरसारतगरकस्तूरीवरचन्दनम् ॥ ८
मणिपात्रस्थितं पश्य प्रावृतं रत्नचेलकैः । सुधारसवरापारकल्पवृक्षफलाकुलम् ॥ ९
मणिपात्रोल्लसत्कान्तिविदारितगृहाङ्गणम् । धूपोद्यन्मणिपात्रैश्च धूपधूमितदिङ्मुख
धूपजोत्तुङ्गधूमोत्थगन्धबन्धुरमारुतम् । कल्पवृक्षसुमोद्भूतसरशेखरकेसरैः ॥ ११
प्रोद्यत्सिन्धूरशुण्डाभसरगुच्छैस्सरैस्तथा । मणिपात्रैर्वृतं पश्य पुष्पसङ्गतवायुभिः॥
वन्धगन्धवहासारगृहमेतत्सुमध्यमे । उद्यच्छशिकलाकारपुष्पशोभितकान्तिभिः॥
विनादितमहावीणाद्यनाहतसुतन्द्रिभिः । मृदङ्गरङ्गिततलशब्दप्रोद्यद्ध्वनीभरैः ॥ १
पूरितान्तर्गृहमुखं पश्याम्ब कमलेक्षणे । नेदृशं शयनीयं ते कैलासेऽपि मनोहरम् ॥
ब्रह्मविष्णुमहेशानईश्वरा मञ्चपादुकाः । सदाशिवोऽस्य फलकसोपधानार्थतत्वके॥
निषण्णा त्वं घनानन्दरसामोदिवरादरा । अधिशेष्व महादेवि दिव्यचिन्तामणी

स्कन्दः—

इत्युक्त्वा तां समालिङ्ग्य देवःकामाङ्गनाशनः । कन्दर्पदर्पनाशोद्यत्कोटिकन्दर्पसुन्
कामेश्वराकृतिर्भूत्वा सिन्दूरोत्तमविग्रहः । चञ्चच्चन्द्रकलामौलिलोचनत्रयदीप्तियुक्
तमालनीलसुगलरक्तालक्तकसत्करः[1] । रक्तकञ्जोपमानास्योरक्तपङ्कजपाणिकः॥
रक्तपङ्कजधामाङ्घ्रिर्मणिजालविभूषणः । रत्नाम्बरधरासारप्रसारितदिशामुखः ॥
तमस्स्तोमतिरस्कारिरत्नाभरणभूषितः । शुभगन्धावृतोत्तुङ्गपीनवक्षोरुबाहुभिः॥
एणञ्च परशुञ्चैव दधानञ्च वराभये । तस्मिन्निषण्णः पर्यङ्के पश्यन्देव्यास्तदानन
मित्रसन्दर्शनोत्फुल्लरक्तपङ्कजसन्मुखाम्[2] । अम्बामम्बुरुहाभाक्षीं त्रिणेत्रां चन्द्रशेख
मुकुटीघटितापाररत्नजालैकभासुराम् । विम्बकान्तितिरस्कारिरदच्छदविराजिता
तिलकोद्भासितमुखांताटङ्कद्युतिकर्णिकाम् । कर्णालंबितरत्नाच्छवालीपालिविराजि
दिव्यचूडामणिस्फारचञ्चच्चन्द्रकसूर्यकाम् । सीमन्तरेखायितसुप्रभोद्यदलिकायुता
मणिमाणिक्यखचितललन्मुक्ताफलावृताम् । उद्यत्कविसमस्वच्छनासाभरणभासुरा

१. रक्ताम्बुजलसत्करः इति पाठः ।　२. सम्फुल्लमिव सन्दर्श इति पाठः ।

कण्ठेमण्डलिकाक्लृप्तरत्नकण्ठसरद्द्युतिम् । चिंताकलम्बितस्वच्छमुक्तागुच्छविराजिताम्
मणिमुक्तासरापारललत्पदकसन्ततिम् । रत्नवैडूर्यगोमेदपुष्परागहरिन्मणिम् ॥ ३० ॥
कल्पिताच्छमहारागपद्मरागोज्ज्वलप्रभाम् । भासितापारसत्काञ्चिकटीतटमनोहराम् ॥
रम्यकिङ्किणिकाक्लृप्तमणिमाणिक्यमौक्तिकैः । खचितापारसारोद्यद्वरहस्तसुसंवृताम् ॥
बाहुबन्धमहानागफणाबन्धोरुमौक्तिकैः । जलप्रभै रत्नगुच्छप्रभाभास्वरशोभिताम् ॥
वङ्किकामुखसम्फुल्लरत्नसेवन्तिकातातिम् । मणिमण्डलसङ्क्लृप्तरत्नसेवन्तिदीधितिम्॥३४
पुराकेतशिरोत्तुङ्गमुक्तारत्नैकशेखराम्। कुमुदाकारमुद्रच्छन्नमणिसुन्दरसन्ततिम्॥३५
मल्लिकामोदिधम्मिल्लमल्लिकालिसरावृताम् । रक्षामणिमयाकारछत्राकवरशोभिताम् ॥
रत्नाङ्गुलिप्रवितप्रभाजालल्लसत्कराम् । निचोलकीलितापारनानारत्नततिद्युतिम्॥३७
रत्नाञ्चलल्लसद्वस्त्रां कुङ्कुमारुणसुन्दराम्। पाटीररसकस्तूरीसारलेपितसत्कुचाम्॥३८॥
चन्दनद्रवदिग्धाङ्गीं मुग्धस्मितमनोहराम्।अङ्गुष्ठिकालसद्धीरकलिकोत्कान्तिताम्बराम्
घुमुघुमितसद्वस्त्रां पटवासैकवासिताम् । पदाम्बुजतलारक्तजाटवीललितोज्ज्वलाम् ॥
मञ्जीररत्नजरणच्छिञ्जन्मञ्जुलनिस्वनाम् । चतुर्भुजेक्षुकोदण्डपाशाङ्कुशवरोज्ज्वलाम्॥
सौन्दर्यधारासर्वस्वांतामालिङ्ग्यचसुन्दरीम्। महादेव्यानिषण्णोऽभूत्तस्मिन्मञ्चेमनोहरे
सुधापाटीरसास्वादिदिव्यचन्दनचर्चितः । दिव्यपुष्पसरासारलसद्गलतरङ्गकः॥४३॥
रत्नवृक्षोद्यतापारधूपवर्तिसुतर्पितः । मणिद्वीपमहावृक्षमुद्भासितदिगन्तरः ॥ ४४ ॥
द्रवत्पुष्पोत्थसलिलासारशीकरसुन्दरः। विजहार महादेवः कामेशः कामनाशनः॥४५

कामेश्वर्या महादेव्या चिरं कालं द्विजोत्तम ॥ ४६ ॥
चिन्तामणीसारगृहान्तरालविद्योदितापारमणीन्द्रजालैः ।
मञ्चे सुगन्ध्युत्तरसच्छदावृते देव्या हरस्तत्र मुदा विजह्रे ॥ ४७ ॥
नानागन्धसुमानुमोदितरसासारैकशुद्धान्तरः
कामेशः कमनीयसौरभभरैरानन्दितस्वान्तरः ।

---

१. ज्वलत्प्रभैरिति पाठः । २. वेणीमण्डल इति पाठः ।
३. पादाम्बुजालकलिकाबाडवीलितिकोज्ज्वलामिति पाठः ।

कामेश्या शिवया कृपारसभरैस्सङ्क्लृप्तभोगोत्सवै-
जातानन्दभरैस्सहैव करुणामूर्तिः कृपासागरः ॥ ४८ ॥

ईश्वरः—

नित्यारक्षणदीक्षितेन नगरं ख्यातं वरं श्रीपुरं
द्वीपेऽस्मिन्मणिकल्पिते तदुपरि मध्यस्थितं ते गृहम् ।
यद्वा चिन्तितकामदानमणिभिः क्लृप्तं त्वदर्थे मया
नित्याभिः पुरमेतदद्य कृपया भोभुज्यतां भूतिभिः ॥ ४९ ॥

स्कन्दः—

ब्रह्माविष्णुसदाशिवेश्वरमहारुद्रोरुमञ्चेश्वरी-
स्तीर्णे तल्पवरे शिवाङ्कनिवसा श्रीकामदानेश्वरी ।
कामाख्येन महेश्वरेण त्रिजगन्नाथेन हर्षान्तरा
नित्याभिः परिसेविता भगवती पायात्सदा मां द्विजाः ॥ ५० ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे चिन्तामणिसौधवर्णनन्नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

---

## श्रीचक्रवर्णनन्नाम षोडशोऽध्यायः.

मुनयः—

कथं देव्या तारकारे पुरं श्रीपुरनामकम् । कल्पितं श्रीमहेशाज्ञावशतस्तद्वदाद्य नः ॥

स्कन्दः—

यथा देव्या निर्मितञ्च श्रीपुरं शृणुत द्विजाः । कामेशेन शिवेनैव सा प्रोक्ता परमेश्वरी ।
ललिता श्रीमहादेवी सैव त्रिपुरसुन्दरी । मनसा चिन्तयामास पुरं तत्र मनोरमम् ॥
मणिप्राकारशतकैर्भूधराकारगोपुरैः । मणिमाणिक्यखचितनवरत्नोरुकान्तिभिः ॥४
प्रफुल्लसुमनामोदिरत्नवृक्षवनावृतम् । कल्पवाटीपरिवृतनीपोद्यानविराजितम् ॥ ५ ॥
सुधासिन्धुतरङ्गौघरम्यपर्यन्तमारुतम् । नवरत्नागारसौधकुम्भोद्यत्कान्तिकान्तितम् ।
दिव्यमुक्तावलीक्लृप्तसरावल्यभिभूषितम्[1] । गोमेदपुष्परागोद्यत्प्रवालमणितोरणैः ॥७

1. भूषितैरिति पाठः ।

हीरजालकसञ्छन्नकुम्भमौलिविराजितैः। सौधपंक्तिसमुत्सेधविशालायुतशस्तदा ॥८॥
मणिमाणिक्यखचितनवरत्नविचित्रितैः। धूपितैस्तगरापारपाटीरोशीरचन्दनैः ॥ ९ ॥
पुरद्वारैर्ध्वलितगवाक्षवलभीयुतैः। मण्टपावलिसञ्छन्नमौलिपालिततद्द्युतिः ॥ १० ॥
मणिरोचिचितादर्शकुट्टिमोद्यत्कवाटकैः। प्राक्पश्चादुत्तरे चैव दक्षिणे पूर्वतः क्रमात् ॥
मणिगोपुरमौलिस्थहीरोद्यत्कलशप्रभैः। तिरस्कारितचन्द्रार्कैः प्राकारैर्मणिकल्पितैः॥
नियुतायुतगोद्भासिसमुच्छ्रायोरुमण्डलैः। गोमेदपुष्परागेन्द्रनीलवैडूर्यहीरजैः ॥१३॥
मुक्ताविद्रुमरक्ताच्छततिकान्तिविराजितैः।गरुडोद्गाररत्नानां मण्टपावलिशोभितैः ॥
हीरसौधैर्मणिप्रोद्यद्वातायनगवाक्षकैः। देवीविहारसदनैर्मदनान्तकरस्य च ॥ १५ ॥
पर्यन्तरत्नमालादिछन्नमौलिविराजितैः। चन्द्रोपलमहासौधैश्चन्द्रासारैकनिर्झरैः॥१६
रम्यादर्शमहासौधैः रत्नपुष्पविराजितैः। यालीपालीचितानेकमयूरवरहंसकैः ॥ १७॥
गजसौधैर्हंससौधैस्सिंहसौधैश्च भास्वरैः। तुरङ्गरथसौधैश्च शार्दूलोत्तमसौधकैः ॥१८॥
तत्तत्प्राकारान्तराले श्रीदेव्या मनसा ततैः। सुरत्नतरवस्तत्र महापुष्पफलावृताः॥१९
चन्दनानाश्च विपिनैर्नयनानन्ददायकैः। कल्पवृक्षोरुविपिनैर्नीपोपवनसुन्दरैः॥२०॥
कदम्बवनराजीभी राजद्राजीववापिकैः। तत्प्रान्तमध्यसौधैश्च नवरत्नविचित्रितैः॥२१
धारासारगृहैश्चैव भ्रमद्रथगृहैस्तथा। मन्दारपारिजातोत्थवनवायुसुगन्धितैः ॥ २२ ॥
प्रत्यग्रकेतकोद्भासिचम्पकोद्दामसौरभैः। कुरवाशोकवकुलरसालमधुकैर्ध्वैः ॥ २३ ॥
खर्जूरपूगनारेलनागपुन्नागलोध्रकैः। तक्कोलाङ्कोलहिन्तालमणिरम्भाकपित्थकैः॥२४
तगरागरुकेदारदेवदारुमधूककैः। चिरिबिल्वैश्च बिल्वैश्च मधूकाम्रातकैर्ध्वैः ॥ २५ ॥
वल्लयस्तत्रराजन्ते द्राक्षैलापिप्पलीयुताः। मरीचयःकुन्दमल्योजाजिकाचन्द्रिकायुताः
तद्रम्यकुसुमामोदिसौम्यवन्धुरमारुतः। हंसा मयूराश्च पिकाः कोकसारसपंक्तयः॥२७
कपोतशारिकारावमृगाश्च चमरीगणाः। कुरङ्गा हस्तिनः कोलास्सञ्चरन्ति वने मुदा॥
नयनानन्ददं नित्यं श्रीपुरे मणिद्वीपके। पद्मिन्यो विविधास्तत्र रत्नसोपानमण्डिताः॥
प्रान्तरत्नोद्यतमहामण्टपावलिभासुराः। तत्र देवद्रुमापारवनराजिविराजितम् ॥३०॥
तत्प्राच्यांमणिसङ्कुसंदण्डिनीधाममुत्तमम्। नानारत्नमणिभ्राजिसिन्धुरौघविराजितम्

१. मणिपुष्पफलावृताः इति पाठः।

भद्रमन्द्रैर्भद्रमृगैश्चतुर्दन्तालिशोभितैः। कटस्रवन्मदभरैः कुम्भोद्यत्पाण्डरारुणैः ॥३
मणिग्रैवेयकण्ठादिकुथाङ्कुशविभूषितैः। पूर्वतो भाति शैलेन्द्रनिभैर्वारणसत्तमैः ॥३
दक्षिणे तत्र प्राकारो नवरत्नविराजितः। मन्त्रिण्यास्तत्र तद्धाम नवरत्नविचित्रितम्।
उच्चैश्श्रवाधिकैरश्वैर्नानावर्णैर्वलोत्कटैः। कल्माषैस्तित्तिरिप्रख्यैरक्तकर्बूरश्वेतकैः॥३
नीलपीतकमाञ्जिष्ठैर्मयूरसदृशैर्हयैः। तत्राश्वकोटिभिर्युक्ता मन्त्रिणी सेवते तदा॥३
सुद्रिण्याः पश्चिमे धाम नानारत्नविचित्रितम्। कुम्भोद्यन्मणिकूशाक्षचक्रजालपताकैः
युगन्धराक्षफलकैर्घोणाकर्बूरशोभितैः। रथैश्च कोटिभिस्तत्र शोभिता सुद्रिणी तदा
वाराह्याश्चोत्तरे धाम रत्नावलिविभूषितम्। सापि प्रमुदिता नित्यं पाति तं योगिनीगणं
नवकोटिभिरत्युग्राः पाशासिवरपाणिभिः। नित्यानामन्तरा सद्म पद्मरागमणीततम्
ततो हि परितस्तत्र ज्वालामालिनिकाततः। प्राकारोवह्निनावीतः पर्यन्तज्वालशोभितः
अनिन्धनो दहत्येषस्वशिखालेडिताम्बरः। अहोरात्रमविश्रान्तोज्वालाव्याप्तदिगन्त
मातरोवटुकाश्चैवडाकिन्योयोगिनीगणाः। यान्तितत्रान्तरे देव्याः प्राकाराणांशताष्ट
मार्ताण्डभैरवश्चैव तथैवानन्दभैरवः। प्रमोदभैरवश्चैव तथा वै मोदभैरवः ॥ ४४ ॥
प्राच्यां प्रतीच्यां तत्पाति दक्षिणे च तथोत्तरे। सुधाकूपास्सुधावाप्यो घृतक्षीरदधिस्र
मधुस्रवास्तथा नद्यः पुटकेपुटके मधु। सुधाफलास्सदा वृक्षाश्चाम्लानानिसुमानि च
योजनायुतगन्धीनि नेत्रानन्दकराणि च। द्वीपोऽयं कुमुदाकारस्सुधावार्धितरङ्गकैः।
रञ्जितः परितो भाति मणिसारैकसुन्दरः। लक्षद्वयं लोचनानां मनसा शिवनिर्मितः
तत्र चिन्तामणितते सौधे परमभास्वरे। कामेश्वर्या च कामेशस्तत्र नित्यमुपासते॥
नानाभोगविहारैश्च नित्याभिः परिसेवितः। ब्रह्मविष्ण्वीश्वरसदाशिवरुद्रोरुमञ्चके॥
निषण्णः परया देव्या कामेशः कामदायकः। कामेश्वर्या सदैवास्ते कामदानैकदीक्षि
कोटिकन्दर्पदर्पघ्नः कपर्देणाङ्कशोभितः। सुरक्तपङ्कजाकारविग्रहस्सुन्दराकृतिः॥५
जपाकुसुमनिभाधिक्यकामेश्या कान्तिवत्तया। सेवितो विविधैर्भोगैर्नित्याभिःपरिसे

पाथोजातभवप्रियाकरमहापङ्केरुहाध्यासिता
पाण्योर्लोलधृताक्षचामरगणैस्संवीजिता सा शिवा।

१. मन्त्रिणीसेवितेति पाठः। २. प्रासासि इति पाठः।

नित्याभिः परिसेविता प्रमथपेनाध्यास्त मञ्चोत्तरं
स्वस्यारक्तनखांशुनिर्गतहरिब्रह्मेशलीलायुता ॥ ५४ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे श्रीचक्रवर्णनन्नाम
षोडशोऽध्यायः ॥ १६ ॥

मणिद्वीपात्कैलासगमनन्नाम सप्तदशोऽध्यायः.

जैगीषव्यः—

श्रुतमेतन्महाख्यानंस्कन्दत्वत्तोऽखिलार्थदम् । मणिद्वीपोमहादेव्याश्श्रीपुरस्यचवर्णनम्
पराशक्तेर्महासौधश्चिन्तामणिगणाश्चितः । सुधासिन्धोर्मध्यगतकल्पवाटीवनावृते ॥२॥
नीपोपवनपर्यन्तं श्रुत्वाहं नितरां मुने । अत्यन्तं विस्मयाविष्टः परिपूर्णमनोरथः ॥३॥
सर्वज्ञ हृदयानन्द गौरीहृदयनन्दन । तारकारे तदा देवः किश्चकार शिवायुतः ॥४॥
तन्मे वद विशेषेण मह्यं शुश्रूषवेऽनघ ॥ ५ ॥

सूतः—

जैगीषव्यवचश्श्रुत्वा मयूरवरवाहनः । उवाच मनसा देवन्नत्वा हृष्टतनूरुहः ॥ ६ ॥
जैगीषव्याय मुनये विनयोदारसंयुतम् । माधुर्यगुणगाम्भीर्यचक्षूरस[1] विनिर्मितम् ॥७॥

स्कन्दः—

मणिद्वीपे सुधासिन्धौ मध्येगतमणिप्रभे । मणिप्राकारपर्यन्तकल्पवृक्षौघशोभिते ॥८॥
नीपवाटीसमाक्रान्तचिन्तामणिविराजिते । महासौधगृहागृङ्गमहाद्युतिविराजिते ॥९॥
दिव्यचिन्तामणिगृहे कल्पवाटीपरीवृते । चिन्तामणिगणज्योतितिरस्कृतदिवाकरे ॥
तस्मिन्नालम्बिरत्नौघशृङ्खलाबद्धमञ्चके । हरिब्रह्ममहेशेशसदाशिववरार्चिते ॥ ११ ॥
पादप्रपीठभूतेषु सृष्टिस्थित्यन्तकारिषु । तस्मिन्विहारशयने कामकामेश्वराकृती॥१२
चिक्रीडतुश्चिरं कालं देवौ रं[2]ससदे मुने । तदा सम्प्रार्थयामास देवी देवं महेश्वरम्॥१३
प्रणयात्प्राञ्जलिर्देवी भगवन्तं महेश्वरम् ॥ १४ ॥

१. विजृम्भितमिति पाठः ।
२. रससटे इति रतसटे इति च पाठः ।

देवी—

ममात्यन्ततपोद्भूतमहानन्दरसेन च । अनन्तजगदुत्पत्तिसंहारस्थितितोषकृत् ॥१५
हृदयेन तवेशान निर्मितो द्वीप उत्तमः । सुधासिन्धुतरङ्गौघमणिभागैकसुन्दरः॥१६
तत्र चिन्तामणिकृतसौधमध्यस्थमञ्चगः। वस मागच्छकैलासमत्र मे रमते मनः॥१७
यादृश्यत्र मम प्रीतिस्तादृशी न च कुत्रचित्। ममान्तरात्मा भगवन्मम प्राणशिरोमणि
विज्ञप्तं यन्मया शम्भो तत्स्वीकुरु महाप्रभो । तदुदारतरां वाणीं समाकर्ण्याह तां शिवा

ईश्वरः—

ममेष्टवासस्सुभगे कैलासो गीयते बुधैः । शम्भोः कैलाससदनमिति रूढिर्महेश्वरि॥
अत्र त्वञ्च मया सार्धं विहरस्व यथेच्छया । सुधासागरमध्यस्थमणिद्वीपे मनोहरे॥
कल्पवृक्षमहावाटीनीपौघद्वीपिनः कुले । यथा त्वयि मम प्रीतिस्तथा द्वीपे महेश्वरि॥
अस्मिन्नेव वसामीति ममापि नियतं मनः । एकोऽप्यहमनेकात्मा नानाकारोऽहमीश्व
यथा सूर्यः पुरे राष्ट्रे द्वीपे लोकेष्वपीश्वरि । एक एव हि तत्रत्यैर्दृश्यते स्वगृहोदितः।
तथाहं सर्वभूतेषु सर्वान्तर्वास एव हि । अत्राहं वै त्वया देवि कामेश्वरसमाह्वयः ॥
त्वञ्च कामेश्वरी देवी नानारूपाणि कल्पय ।

स्कन्दः—

इत्युक्ता सा जगन्माता शिवस्यानुमतं शिवा । चकार रूपं कामेश्यास्त्रिपुराख्या महेश्व
तथा तत्र मणिद्वीपे नित्याभिः परिसेविता । कामेशावस्थिता देवी कामेशपरमेश्वरे॥
रमयामास विविधैर्भोगजालरसैश्शिवा।पुनः कतिपये काले शङ्करौ लोकसुन्दरौ॥
वृषभं तं समारुह्य कैलासमभिजग्मतुः। नन्दिभृङ्गिगणौघैश्च [2]देवेन गणपेन च॥ २९
नानावाद्यमहारावबधिरीकृतदिङ्मुखः । कैलासमौलिरत्नौघसदने परमेश्वरः ॥ ३०
पर्वतेन्द्रे गजायुक्तो गणयुक्तः परं सुखम् । नानाहारविहारैश्च कोटिकन्दर्पसुन्दरः॥
सुधासागरोद्भासचिन्तामणिद्वीपमध्येमहाकल्पवातोद्यतापारवाटीमनोज्ञे॥ ३२
महानीपजालान्तरोद्यत्प्रभाभिस्सुचिन्तामणी-
क्लृप्तसौधान्तरोद्यन्महामञ्चके कामरूपो महेशः ॥ ३३ ॥

१. कृपानिधे इति पाठः । २. देवेभगणपेनेति पाठः ।

तथा मे जनित्र्या सदैवास्त ईशो जगज्जालसंहारसंस्थास्थितिज्ञः ।
नगाग्रेऽद्य कैलासमौलौ महान्ते निषण्णस्सदा विश्वलीलो महेशः ॥ ३४ ॥
सदैवाम्बया चित्रशक्तिर्महेशो ह्यनन्तान्यपाराणि चित्राणि तस्य ।
न जानन्ति वेदा न जानन्ति देवास्तदाकाररूपं न कोपीशरूपम् ॥ ३५ ॥
किमेतत्तदापारनीरूपमेद्यापरं निर्गुणं किन्तु लभ्यं प्रसादात् ॥ ३६ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे मणिद्वीपात्कैलासगमनन्नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## कैलासहिमालयसमागमो नाम अष्टादशोऽध्यायः.

स्कन्दः—

एकदाद्रीन्द्रमालोक्य मेना हृष्टतनूरुहा । उमां संस्मृत्य निश्वस्य प्रोवाचेत्थं पतिव्रता ॥

मेना—

आर्यपुत्र नजानामि प्रवृत्तिमपि किञ्चन । विवाहसमयादूर्ध्वं तस्या गौर्या गिरीश्वर ॥
प्रवृत्तिमपि नो देव्या जानेऽहं तेन दुःखिता । स वृषेन्द्रगतिर्देवो भस्मोरगविभूषणः ॥
महापितृवनावासो दिग्वासाःक्वास्तिसम्प्रति । अष्टौ [1]जामातरोदृष्टा [2]ब्राह्मीप्रभृतयोऽत्रयाः
दुःखस्वरूपा मन्येऽहं बालिकाकष्टहेतवः । [3]तस्यैकस्यै न कोऽप्यन्यो ह्येकोरुद्रश्श्रुतीरितः
तदुदन्तप्रवृत्त्यैव क्रियतामुद्यमो विभो । तस्याः प्रियाया वाक्येन तदपत्यप्रियो गिरिः
उवाच वचनं सास्रमुमावात्सल्यसन्निधिः ॥ ७ ॥

गिरिः—

मैवं वदाद्य मेने त्वं दुःखाधिक्यं महेश्वरे । मत्सुता सा शिवा देवी त्रैलोक्यजननी खलु
कन्या ते कारणाज्जाता शिवस्यार्धाङ्गभागिनी । यस्याःकटाक्षमात्रेण सर्वेषां सर्वसिद्धयः
लभ्यन्ते वै महेशान्यास्सा किं दुःखाधिका भवेत् ।
सुखैकवसतिश्शम्भुश्शङ्करश्शाश्वतोऽव्ययः ॥ १० ॥

---

१. धामानीति पाठः । २. या मातरः इति पाठः ।
३. तस्यैकस्येति पाठः ।

तत्स्वरूपपरिज्ञानं वेदैरपि न शक्यते। यस्य लिङ्गार्चनेनैव मोक्षभाग्यमदूरगम्॥१
यस्यार्चनेन देवानां देवत्वं किल भामिनि। यस्यैकवसतिर्मेने कैलासो रजताचलः
धनुर्यस्य महामेरुस्सर्वदेवालयो महान्। यस्य बाणो हरिस्साक्षाद्यस्याश्वाश्श्रुतयोऽखि
रथो धरित्री देवस्य सर्पराजोऽथ शिञ्जिनी। स्रष्टा यस्य किलेदानीं सारथीरथवाह
चन्द्रसूर्यौ तथा चक्रे तस्य देवस्य धूर्जटेः। ख्यातो देवेषु देवेशस्सुधन्वा सखिषुर्ह
हरिकेशश्च भगवांस्तथाश्वपतिरीश्वरः। विष्णुब्रह्ममहेशादिलोकोत्थायाश्श्रियः प्रि
तस्य कैलासकोट्यंशकोट्यंशेनापि नो समाः। तद्दर्शनार्थञ्च मम गन्तुं वृत्तं मनः
अहमेव गमिष्यामि तस्या मेने गवेषणे। गवां पतेर्महेशस्य कैलासनिलयस्य च॥१
नितरां बाधते प्रेम तद्दृष्टाग्निदूषितम्[2]। यदा प्रभृति सा देवी निर्गता मम सद्मतः।
मन्ये मेने तदारभ्य पद्मसद्मापि निर्ययौ। तदालापादयो मेने श्रोत्रे शब्दग्रहे प्रियौ
प्राणेश्वरि तदारभ्य स्यातां शब्दग्रहान्तरौ। जैवातृकी यतोऽह्नस्स्याद्दरीभूता दृशो
प्रियेजैवातृकीज्योत्स्नाततोऽह्नोऽपिधुनोतिमाम्। यदपत्यप्रमोदेनदेवदेव्योःपदाम्बु
धन्यःपश्यामिनेत्राभ्यांचिरायचिरपापहृत्। दृष्ट्वाशिवौशिवंमेस्यादितिमेनेगिरीश्वर
मेने धन्ये ह्यद्य कन्यादर्शनेनाद्य धन्यताम्। मान्योऽतिनितरांशम्भोः कैलासारोहणे
मैनाकानय रत्नानि वासांसि विविधानि च। वृत्तमुक्ताफलानां तु कोटिद्वयपरीमित
तथा हरितरागाणां हीरकाणां तुलाशतम्। नवलक्षाधिकं विप्रषडस्त्राणां सुतेजसाम्
लक्षद्वयं विडूराणां तुलाविमलवर्चसाम्। कोटिश्च पद्मरागाणां पश्चाद्वैहि तुला मुने॥
पुष्परागतुलापञ्च कोटिश्च गुणितस्तदा। तथा गोमेदरत्नानां तुलालक्षमितं मुने॥
इन्द्रनीलमणीनां तु कोटिद्वयमितं तथा। गरुडोद्गारिरत्नानां तुलाः प्रयुतसम्मिताः।
शुद्धविद्रुमरत्नानां तुलाश्च नवकोटयः। अष्टाङ्गाभरणानाञ्च सङ्ख्या कर्तुं न शक्यते
मकुटाङ्गदकेयूरचूडामणिशिखण्डकाः। कर्पूरा नागबन्धाश्च वङ्किकाङ्गुलिकादयः॥३
वेणीमण्डलसम्भ्राजिरत्नपुष्पगणास्तथा। मणिहस्तसराश्चैव हीराङ्गुष्ठाग्रवेष्टनाः॥३
रत्नग्रैवेयचिन्ताकलोलमुक्ताफलीसरैः। रत्नाच्छपदकानाञ्च सरावलिमणिप्रभैः॥३
रत्नताटङ्कवलयैर्नासावहैश्च मौक्तिकैः। रत्नकाञ्चयोऽद्य घण्टाढ्यमुक्तागुच्छैकलम्बित

१. सखिपुर्हरिः इति पाठः।

२. तद्दृष्ट्या इति पाठः।

रत्नमञ्जीरपादाङ्किकटका रत्नशृङ्खलाः। कुण्डलीभोगवक्राभा रणत्कण्टकपाडकाः॥३६
नखाङ्गुलीवेष्टनकैर्मुक्तालोलैस्स्रवद्धरैः। वाससाञ्च विचित्राणां नानावर्णावृताम्बराम्॥
पद्मरागसवर्णानां सोमधामैकवर्चसाम्। बालातपप्रभाणाञ्च नीलमाञ्जिष्ठवर्चसाम्॥३७
हंसपालीगजाकारसिह्मप्रान्तोरुशोभिताम्। सुवर्णपद्मसङ्कस्रवाससां राशयस्तथा॥३८॥
कर्बुराणाञ्च पीतानां हरिन्मणिनिभात्मनाम्। कृमिसूत्रोत्थजाग्र्यद्वासोराशिभरैरपि॥
निचोलैर्विविधैस्तत्र मुक्ताप्रान्तोरुशोभितैः। दुकूलकूलविलसन्मणिमौक्तिकजालकैः॥
निचितस्वर्णवस्त्राणां भारकाणां शतत्रयम्। गन्धगन्धायितानाञ्च कङ्कतादर्शभारकैः॥
अञ्जनारोचनानाञ्च कर्पूरपटवाससाम्। पाटीरचन्द्रकस्तूरीगन्धैर्मलयजैस्तथा ॥४२॥
तगरागरुतकोलजाजीपत्रफलैरपि। लवङ्गैलामधुरससर्जनैश्च मनश्शिलाः ॥ ४३ ॥
सिन्दूरालक्तकनिशाकुङ्कुमैः कङ्कणैस्तथा। क्रमुकाणां राशयश्च स्वच्छनागकपत्रकैः॥
मुक्ताचूर्णार्द्रजात्युच्चचन्दनैर्भूपवर्तिभिः।[1] स्वमौलिचन्दनानाञ्च पालिकालिभरैरपि ॥
रत्नकन्दुकहल्लीसदण्डैश्चैवाथ पालिकाः। दिव्यवृक्षफलैश्चैव रत्नवीटीगणैरपि ॥ ४६ ॥
वराटिकाकोटिभिश्च मुक्ताशुक्तिकरण्डकैः। छत्रव्यजनजापारचामरापारदर्पणैः॥४७॥
फलमूलभराणाञ्च तथा सुमनसां भरैः। पार्वतीयैश्च पुरुषैरूह्यमानैश्च सङ्घशः ॥४८॥
शकटीनांकुलभरैः पूरितैरत्नवाससाम्। सुवर्णकोट्योद्दप्ताङ्ग्यो दास्योदासाश्च कोटिशः

स्कन्दः—

सर्वाण्यपि समादाय प्रतस्थे भूधरेश्वरः। ययौ कैलासमीशस्य मध्ये दृष्टो महामुनिः ॥
दूर्वासास्तपसां श्रेष्ठस्तपोयुक्तो जटाधरः। भस्मरुद्राक्षसंवीतो वृतो मुनिगणैरपि॥५१॥
रुद्रावर्तनशीलैश्च शिवलिङ्गार्चकैस्तथा। विल्वपत्रैस्त्रिकालश्च पञ्चाक्षरपरायणैः ॥५२॥
तं दृष्ट्वा प्रणनामाथ मेनया हिमभूधरः। मैनाकेन नगश्रेष्ठो गन्तुं तत्रोपचक्रमे ॥५३॥
तमाह विनयान्नम्रं हिमवन्तं महागिरिम् ॥ ५४ ॥

दूर्वासाः—

कुत्र वा गम्यते शैल मैनाकेन च मेनया। तद्वृत्तं सम्यगाचक्ष्व यदि श्राव्यं नगोत्तम॥

१. स्रवत्सरैरिति पाठः।

तद्दूर्वासवचश्श्रुत्वा प्राञ्जलिर्विनयान्नगः। प्रोवाच तं महात्मानं दूर्वाससमकल्मषम्॥

हिमवान्—

मेनया दर्शनेप्सातो वहुकालीनया मम। देवीमुखाम्बुजं द्रष्टुं गच्छामि स्नेहयन्त्रितः

अजापि सा महादेवी मत्तो जातेति मे स्पृहा। कैलासे शङ्करं द्रष्टुमुपवर्हणसत्करः।

शिवपादाम्बुजद्वन्द्वदर्शनार्थं महामुने। हिमवद्वचनं श्रुत्वा मुनिः प्राह तदा मुदा॥५

दूर्वासाः—

गच्छस्वारिष्टपन्थानं मा ते कार्यस्यविघ्नता। दृष्ट्वादेवं महादेवं त्वन्मौलौ संस्थितं हिम

तपस्यन्तश्च केदारे मुनिभिर्ज्ञापयेश्वरम्। केदारेश्वरलिङ्गस्य वरिवस्यापरं सदा ॥६

शिवाज्ञया महादेवी त्वयाप्यत्रागमिष्यति। तां प्रसाद्य तपःपारं गन्तुमिच्छामि भूध

स्कन्दः—

इत्युक्तो मुनिना भूभृन्नत्वागाच्छाङ्करं नगम्। मैनाकेन च संहृष्टो मेनयानुययौ द्रुतम्

श्वशुरं शशिशेखरस्य देव्याः पितरं ज्येष्ठकुलाचलेषु धुर्यम्।
वयसा[1] शिरसा ननाम पादौ हिमभूमेस्स तदा महेशशैलः॥ ६४॥

मैनाकेन च मेनया हिमगिरिः कैलासमौलिस्थितं
तत्रागादगजापतिं सुमनसां भारैश्च रत्नार्हणैः।
स्वस्यापारशिरोडुसन्निभफलैः[2] पुष्पार्हणैरद्रिरा-
डायातोपचितिप्रधानपरमानन्देन द्रष्टुं शिवौ॥ ६५॥

कलधौतनगः कलासु दक्षश्शशलक्ष्माककलाधरोरुमौलेः।
कुलभूभृत्तिलकं प्रणम्य हर्षाच्छ्रयणेनापि शिवस्य वाचमूचे॥ ६६॥

कैलासः—

भवतो भवदङ्गसङ्गतोऽप्यभवद्दर्शनमद्यशैलमौले।
भवनाशो हि भवप्रमाणतो भगिनीचास्य[3]गिरेरहो भवानी॥ ६७॥

---

१. वचसा इति पाठः। २. शिरोरुसन्निभ इति पाठः।
३. भगिनीचाख्य इति पाठः।

भवतो विपिनावनीतपोद्यत्तपसो राशिमुनीषु देवसङ्घे ।
वनजालेषु नगेश्वरोरुमौले कुशलं किन्नु तवाण्डजे मृगेषु ॥ ६८ ॥
अगमा वयमेव लोकजाले सुगमा अप्यतिशङ्करस्य भक्ताः ।
निगमागमसंस्तुतस्य पादाश्रयणेनानुगता सदा नगेश ॥ ६९ ॥

स्कन्दः—

इति नगतिलकस्य वाक्यजालं मधुरोदारतरं निशम्य हर्षात् ।
कलधौतनगस्य धूततापैर्वचनैर्नन्दितहृद्गुहोऽभ्युवाच ॥ ७० ॥

हिमवान्—

तव मौलिकुलेषु तुङ्गलिङ्गप्रथितापारशिवालयोज्वलद्गाः ।
भवतापशमाय केवलं भवपादाम्बुजसंश्रयाद्विशिष्टः ॥ ७१ ॥
तव मौलिवनस्पतिप्रभावे तव मौल्यण्डजसन्मृगे नगाद्य ।
कुशलं किमु चित्रमेतदेव शम्भोः पदभक्तेषु न वा किमस्त्यलभ्यम् ॥ ७२ ॥

स्कन्दः—

इत्यालिङ्ग्य नगोत्तमौ सरसया वाचा प्रसन्नाननौ
जातानन्दभरौ महेश्वरपदाम्भोजानुरक्तान्तरौ ।
यातौ देववरमुमामपि तथा तौ मेनया प्रस्तुता-
पारस्तन्यझरीभरीरसवरैश्शैलेन्द्रकन्येक्षणात् ॥ ७३ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे कैलासहिमालयसमागमो नाम अष्टादशोऽध्यायः ॥ १८ ॥

---

## हिमाचलेश्वरसमागमो नाम एकोनविंशोऽध्यायः

स्कन्दः—

आराद्दृष्ट्वा तदा विप्र हिमवान् हेमभूषितम् । विमानं तदनुप्राप्य स्वमौलौ स्थातुमद्रिराट्
मेनया रत्नभारैश्च दुकूलफलभारकैः । मैनाकेनाथ सव्ये तु दत्तहस्तो नगाधिपः ॥२॥

दक्षे त्र्यक्षमहाशैलकैलासाचलपाणिना। दत्तहस्तो नगाधीशस्तन्ददर्श नगोत्तमम्।
विस्मयाक्रान्तहृदयो मेनां वीक्ष्य तदाब्रवीत् ॥ ४ ॥

हिमवान्—

धन्ये मन्येऽद्य नयने मेनेऽद्यैव मनोरथम्। चिराय दृष्टः कैलासो नानाशृङ्गविराजि
यत्र सन्त्युरुरत्नोत्थगर्भधामगतानि च। उत्कृष्टशिवलिङ्गानि सोमधामोज्ज्वलानि च।
तल्लिङ्गगर्भधामोद्यद्दृश्यकुम्भावलीमपि। दूराद्दृष्टं पुण्यतमं यत्र कुत्र शिवालयम् ॥ ७॥
तत्सप्तजन्मपापानां विनाशकमपि प्रिये। कैलासमौलिजापारशिवागारोरुशेखरः॥८॥
जन्मिनां पापगणनाप्रवेशः कुत्र वा प्रिये। पश्य गोपुरजालानि दृषकुम्भोज्ज्वलानि
तद्गोपुरमहाकुम्भबिम्बा इव नभोऽङ्गणे। चन्द्रसूर्यौ तथा तारा बिम्बिताइवसंस्थिताः॥
ग्रहास्सप्तर्षयश्चेमे ध्रुवोऽयं पश्यमत्प्रिये। सौधपंक्तिमिमां पश्य मणिजालैः प्रकल्पिता
सर्वावासोऽपि भगवान्सौधेष्वत्यन्तहर्षितः। मेने त्वत्कन्ययामन्ये विहरत्येवनिश्चितम्॥
राजतेराजतो [1]नित्यंमान्योमन्युसमागमात्। बालोऽप्यबालचरितःकैलासस्त्वेषभूधरः
पुत्रात्प्रियतरो मेऽद्यमैनाकेनाद्यनिश्चितम्। यस्मिन्कैलासभूभागेब्रह्मविष्ण्वादिकांक्षिते
तपसानैवसम्प्राप्यो दुर्दर्शोयोगिनामपि। कैलासदर्शनार्थायतपस्यन्तितपःप्रिये॥१५॥
अद्यापिब्रह्मविष्ण्वाद्यामुनयोगणसत्तमाः।सोऽयं[2]सम्बन्धसम्बन्ध्यासोयंगुरुतयाप्रिये ॥
स्नेहधारानुवशतोह्यगम्यस्सुगमोऽभवत्। नैवदेवादिलोकेषु न वैकुण्ठेनसत्यके ॥१७॥
भूरादिसर्वलोकेषु नास्त्यस्य तुलनाक्वचित्। स्वयमीशेन मनसा कल्पितोऽयं महीधरः॥
विश्वं विश्वसृजा क्लृप्तमेतन्नगनदीवनम्। कालेन शीर्णतां याति कारणात्कार्यमप्यनु॥
अनुमीयेतहेवालेनश्वरेस्थिरता कथम्। किन्तु मृत्युञ्जयेनाद्य विश्वाधिक्येनकल्पितः॥
गिरिशेनगिरीशोऽयं पश्य नेत्रेणभामिनि। कलधौतमहाशैलो धूतपापोऽयमद्रिराट् ॥
एतन्मौलिशिखासारवायुपोतैककांक्षिणः। विष्णुब्रह्मादयो देवा मुनयोमानवाःप्रिये॥
वातोऽपिसंहरत्येषः पापतापं विशेषतः। किन्तु दृष्टोऽयमधुनापीष्टोऽयंचाष्टदेहिनः ॥
वयं विशिष्टास्सर्वेषु धन्यामान्याश्चभूभृताम्। सुराणाञ्च मुनीनाञ्च गणानां किलसत्तमः
हृत्तमोनाशकश्शैलस्त्वन्येहृत्तमनाशकाः। एतस्य दर्शनादेव प्राप्तकामोऽस्मिसांप्रतम्॥

१· धन्यः इति पाठः।
२. सम्बद्धसम्बद्धगौर्या गुरुतया इति पाठः।

स्कन्दः—

इत्युक्त्वा तं महाशैलमारुरोह महागिरिः। अपश्यच्चालयन्दृष्टिं सर्वतश्शैलमूर्द्धसु॥२६॥
नानासौधैकवसतिं गोपुरालिविराजितम्। रत्नप्राकारवृषभैश्शोभितश्चशिवालयैः॥२७॥
रत्नकुम्भोरुधाराभिर्विचुम्बितमिवाम्बरम्। गणसौधगणानाञ्च स्कन्दहेरम्बसौधके॥
तद्गणानां प्रभाभिश्च ततमत्यन्तसुन्दरम्। राजानं पर्वतेन्द्राणां वनसानुविभूषितम्॥
कुलाचलैश्च परितो मूर्तिमद्भिरुपासितम्। उत्फुल्लकमलोदारसरसीभिर्विराजितम्॥
नानावृक्षसुमोद्भूतगन्धवन्धविराजितम्। नानामृगगणानाञ्च कोटिभिः परितोवृतम्॥
मन्दमारुतसञ्चारपुलिनायितदिक्तटम्। नानारत्नमणीकॢप्तमण्टपावलिशोभितम्॥३२॥
गङ्गाभिःपञ्चभिस्तत्रशोभितंलिङ्गसङ्घकैः। मन्दंमन्दंययौपश्यन्गिरिराट्तंगिरीश्वरम्॥
स्नात्वा स देवगङ्गायां कैलासामलपर्वते। कृत्वा चावश्यकं कर्म मेनयासोऽप्यमन्यत॥
धन्यतां स स्वजनुषस्साफल्यमगजेश्वरः। तमागतन्ततो ज्ञात्वा निषधाद्या महीधराः॥
समागताः प्रणम्यैनं प्रालेयाचलमुत्तमम्। मेनाम्मैनाकमालिङ्ग्य कुशलन्तेऽप्यवोचिरे

गिरयः—

धन्य मान्या वयं सर्वे कैलासे निवसामहे। शशिमौलिप्रसादेन वयं त्वद्दर्शनेन च॥३७॥
चिरकालेनेहसाद्य जातमद्रीश्वराधुना। गौरीगुरोर्दर्शनेन सफलो नो मनोरथः॥३८॥
गुरुर्मेना जनित्री नो भवान् गुरुतरोहिनः। एह्यस्माकं गृहान् शैल कदावातवदर्शनम्॥
इत्युक्तश्चाद्रिभिश्शैलस्तानालिङ्ग्यानुमान्यच।तानाहगिरिराजोयंगिरीन्पुत्रानिवौरसान्

हिमवान्—

भवतांस्वस्तिवोवत्सा भवपादैकवर्त्मनाम्। त्रिणेत्रमान्या यूयंहिकिञ्चित्रं स्वस्तयेतुवः॥
भवन्मौलिषु विश्वात्मा भवो भवरुजां हरः। विहरत्येव नियतं भवन्मौलिस्थसौधके॥

स्कन्दः—

इत्युक्त्वा स गिरिर्गत्वा गिरीणामाश्रयेषु च। प्रत्येकंगिरिभिस्तत्रपूजितोभोजनार्हणैः
मेनया गिरिराट् तत्र मैनाकेन च संयुयः। उवास मुदितोऽत्यर्थं कैलासेन मुदायुतः॥
कैलासोऽप्येनमामन्त्र्य भोजनेनार्हणेन च। स्रग्गन्धसुमवासोभिर्मेनया तं नगेश्वरम्॥

१. मनोहरमिति पाठः।

हिमवन्तं गणवरैश्श्रुत्वा चागतमीश्वरः । स्कन्दहेरम्बनन्द्यादीनाहूयाप्रेषयत्तदा ॥ ४
तमानयितुमीशानो मैनाकेन च मेनया । शिवाज्ञां ते तदा श्रुत्वानन्दिस्कन्दगणेश्वरा
विमानेनार्कवर्णेन गणबृन्दैस्समागताः । दृष्ट्वा नगेश्वरं तत्र कैलासस्य गृहोषितम् ॥ ५
मैनाकेन च पत्न्या च पार्वतीयैर्गणैर्वृतम् । विमानादवरुह्यैव नन्दिस्कन्दगणेश्वराः ॥
गत्वा प्रणेमुस्तं शैलं गौरीगुरुमतन्द्रिताः । मेनां नत्वा च मैनाकं समालिङ्ग्य मुदा व
सोऽपि प्रालेयशैलेन्द्रो दृष्ट्वा पौत्रौ मुदायुतः।नन्दिनंतौचशैलेन्द्रोमूर्ध्नाजिघ्रन्मुदाद्वि
मेनापि पौत्रावालिङ्ग्य पुत्रीपुत्राननेक्षणात् । जातहर्षा च पुलकैश्चिरं वाष्पाण्यवर्तय
स्वासनेऽपूपविष्टास्ते कैलासेनानुमोदिताः । गिरिः प्राह तदा पुत्रीपुत्रौतन्नन्दिनंमुद

हिमवान्—

वत्सौ भवन्तौ वहुना कालेनालोकयाम्यहम् । सखायं नन्दिनं पुत्रं द्रष्टुमागाच्च मातरम् ।
भवन्तौ पुत्रकौ युक्तौ मातामह्यानुमोदितौ । चिरंसन्दर्शनानन्दसञ्जातपुलकोद्गमः ॥ ५
पश्यामि तं महादेवं गौरीं हृदयनन्दिनीम्।मातामहेन शैलेन चेत्युक्तास्ते कुमारकाः ॥ ५
सर्वे प्राञ्जलयस्सर्वे शैलमारभ्य वोचिरे ॥ ५७ ॥

स्कन्दाद्याः—

किञ्चित्रं भवतश्शैलगुरोर्गुरुतरो भवान् । पश्य देवं महादेवं गौरीं तव तनूभवाम् ॥ ५८
महेशेन महाशैल प्रेषिता दर्शनाय ते । मेनया सह निर्याहि मैनाकेनामुना मुदा ॥ ५९ ॥
अचिरेण दृशा पश्य देवीं तं चेन्दुभूषणम् । इति सर्वे समालिङ्ग्य गिरयो गणपुङ्गवाः ॥
स्कन्दहेरम्बकाश्चैव मैनाकेन च मेनया । विमानं तत्समारुह्य कैलासेन सहाद्रिराट् ॥ ६१
ययौ कैलासमौलीषु पश्यन्विश्वेशितुश्श्रियम् । सौधमालाश्च तत्रत्यांमणिप्रवरकल्पिता
मेनामुवाच प्रसभं प्रालेयाचल उत्तमः ॥ ६३ ॥

हिमवान्—

जामातुस्ते श्रियं पश्य विष्णुब्रह्मादिदुर्लभाम् । पदवीमदवीयो यो मनसाणीयसा कि
कल्पितुं शक्यते देवि मा दुःखविवशा भव । तद्गिरेर्वचनं श्रुत्वा दृष्ट्वा पौत्रौ च तां श्रिय

१. ससूयं नन्दिनं पुत्रं दृष्ट्वा मां गांच मातरमिति पाठः ।
२. मान्याभ्यवोचिरे इति पाठः ।

उवाच गिरिराजानं मेना नम्रशिरोधरा ॥ ६६ ॥

मेना—

स्त्रिया मया कृता बुद्धिरन्यथैव महेश्वरे। नो चेन्महेश्वरत्वं स्यात्कथं देवे त्रिलोचने॥६७॥

स्कन्दः—

सञ्जातविस्मया मेना मन्ये सर्वं मनोरथम्। पूर्णं शिवप्रसादेन गौर्यास्सन्दर्शनेन च॥६८॥

मैनाकेन च मेनया शिवपदद्वन्द्वार्चनायाधिकं
स्वोद्यन्मौलिगतैः फलैस्सुमधुरैर्मूलैश्च बिल्वीभरैः।
रत्नोद्वाहगणैर्मुदा गिरिवरो वीक्षन्ययौ तां श्रिय-
मुत्फुल्लामलवक्त्रपङ्कजलसन्द्रष्टुं महेशं शिवाम् ॥ ६९ ॥

प्रालेयप्रवलाचलो गिरिवरैर्युक्तोऽविमुक्तं पदं
प्राप्तुं शङ्करदिव्यधामवरगप्रासादमत्युज्ज्वलम्।
कैलासाचलदत्तहस्ततलको ज्येष्ठो गिरिर्विस्मयन्
स्वेनानीतमपारमात्मभरकैः[1] किं देयमित्यादरात् ॥ ७० ॥

पयोदधिपयःकणैः कथमिहास्ति चार्घ्यं मुदे
प्रचण्डतररश्मिभिः किमुत दीपदानेन मे।
इतीव मनसा स्मयन् गिरिवरस्ततोत्तीर्य वै
जगाम भवनं विभोर्गुरुभरातिरत्नोद्वहैः ॥ ७१ ॥

सोऽप्यद्रीश्वरमागतं गिरिजया श्रुत्वैव नन्दीमुखा-
त्तेनानीतविचित्ररत्ननिवहं देव्यै ददौ शङ्करः।
तञ्चालिङ्ग्य मुदा तदा त्रिजगतां नाथोऽपि गौरीगुरुं
प्रेम्णा हेमवितानचित्रितमहासिंहासने विश्य तम् ॥ ७२ ॥

मैनाकेन च मेनया गिरिवरं सम्पूज्य चालिङ्ग्य ता-
न्प्राह स्वस्तिवचोऽप्युदारमनसा तं चाद्रिपश्चेश्वरः।

---

१. अपाररत्नभरकैरिति पाठः।

तत्पुष्पप्रकरं फलोघ्रतकुलं प्रीत्यानुमान्यादरा-
द्भक्त्याभ्यर्च्य गिरिव्रजं सुमधुरैर्भक्ष्यैश्च भोज्यैरपि ॥ ७३ ॥
सम्भोज्य स्वसुतैर्मुदा गणवरैः प्रालेयशैलानुगै-
र्मैनाकेन गिरीश्वरैर्गिरिजया ताम्बूलपुष्पार्हणैः ।
वासोरत्नविभूषणैर्मणिगणैर्धूपैश्च दीपोत्सवै
रुद्राणीगणवर्तनैश्च भगवानम्बायुतो मोदितः ॥ ७४ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे हिमाचलेश्वरसमागमो नाम
एकोनविंशोऽध्यायः ॥ १९ ॥

---

## देवीविहारो नाम विंशोऽध्यायः.

स्कन्दः—

ततोऽन्तःपुरमागत्य सा मेना सोऽद्रिराट् तदा। प्रणतां प्राञ्जलिर्गौरीं मैवमित्यब्रवीदुम

हिमवान्—

गौरि त्वां द्रष्टुमीहातस्समागच्छमिहाम्बिके। मेनया त्वामथात्रागामेनां करुणया गिर
पश्य स्नेहेन देवेशि त्वदालोकनहर्षिता ॥

स्कन्दः—

इत्युक्ता सा च गिरिजा पितृवाक्यप्रहर्षिता। मातरं तां समालिङ्ग्य मेनां हर्षेण भावित
मेनापि तां समालिङ्ग्य गौरीं स्नेहविलोचनैः। अपश्यत्प्रस्नुतपयःपूरैस्तां स्नापयन्त
सविलासा मुखं वीक्ष्य प्रोवाचाम्बां सगद्गदम् ॥ ५ ॥

मेनकोवाच—

धन्ये पश्यामि नेत्रेण चिरमद्य तवाननम्। पुत्रीस्नेहेन त्वां गौरि प्रसन्नेनान्तरात्मना
आनन्दाम्बुनिधौ मग्ना सर्वेन्द्रियगुणैस्सह ॥

स्कन्दः—

इत्युक्त्वा तां समालिङ्ग्य चानन्दाम्बुपरिस्रवैः ।
स्वेनानीतं क्रीडनकं तस्या अदात्प्रीतितस्तदा ॥ ७ ॥

रत्नाभरणजालानि गन्धागरुनिशादिकम् । कुङ्कुमं रोचनांपुष्पं वासोभारनिचोलकम्॥
पालिका वालिका देव्यै सर्वं यत्तदुपाहृतम् । सा दृष्ट्वा मेनया दत्तमनुमान्य मुदाम्बिका॥
तयाहारविहारैश्च स्नाननीराजनोत्सवैः । क्रीडाभिर्विविधाभिस्सानिन्ये वर्षं तदाम्बिका
सोऽप्यद्रिराण्महेशेन सपुत्रोऽनुचरैस्सह । पूजितो गणवर्यैश्चाप्युवासाचलसौधके ॥११॥
एकदा मेनया देवी कैलासाचलदर्शने । नियोजिता शिवाज्ञातो द्रष्टुं देवीसखीगणैः॥१२
ततो विमानं तरसा मेनयाम्बा मनोहरम् । अष्टसिंहमहायुक्तं कामगं सुमनोहरम्॥१३॥
रत्नोद्यद्द्युमणिप्रख्यं दीप्तिदीप्तदिगन्तरम् । अत्यर्कवर्णं तरसा मनोवेगातिवेगितम्॥१४
मुक्तामाणिक्यखचितं पताकाछत्रशोभितम् । सिंहासनयुतं दिव्यमणिपुष्पसरावृतम् ॥
मणिदीपमहाकान्तिकान्तितं चोज्वलत्प्रभम् । रत्नकुम्भशतोपेतमन्तरिक्षरथोपमम्॥१६
धूपामोदैकबहुलं पुष्पदामसुवासितम् । मेनयाम्बा समारुह्य कैलासं द्रष्टुमभ्यगात्॥१७॥
फलजालैश्च ताम्बूलैर्गन्धपुष्पभरैरपि । भूषिता भूषणैश्चित्रैर्देव्याश्चापि सखीगणैः ॥१८
रक्तानुरक्तनाट्यैश्च सेवावसरशिक्षितैः । चामरैर्वीजयत्यन्या काचिच्छत्रविधारिणी ॥
काचित्ताम्बूलपात्रश्च कल्काधारधरापि च । कङ्कतादर्शनकराः फलपुष्पस्रजोत्कराः॥
गन्धपात्रकरावासा रत्नभूषणसत्कराः । भृङ्गारुपात्रपानीयैश्शीतैर्धूपैश्च दीपकैः ॥ २१ ॥
एवं सखीगणो देव्या देवीं मेनाश्च सेवते । वीणावेणुमृदङ्गानां रम्यध्वनिकरास्तथा ॥
उमा सन्दर्शयामास मेनायै तन्महोत्सवम् । प्रथमावरणं देवी कैलासस्य महेशितुः ॥२३
नानाप्रकारमणिभीरञ्जितं दिव्यमद्भुतम् । तत्प्राकारमणिज्योत्स्नाचन्द्रार्कौ नैव भासतः
गोपुराणां लक्षकैश्च सहस्रतलमण्डितैः । रम्यरुद्रावलीक्लृप्तमहावृषभसेवितैः ॥ २५ ॥
पश्य मेनेऽत्र परितः कल्पिता एव सागराः । कैलासस्य महामेरुर्वृषस्तम्भ इव स्थितः॥
सागराः परिघाकाराः प्राकारस्यास्य शोभिताः । लक्षस्तम्भैर्मणीक्लृप्तैर्मण्टपोऽयं सुलोचने
तन्मध्यसरसीराजत्कलहंसैस्सुपद्मकैः । कुरुविन्दमणीजालसोपानप्रान्तभासुरम् ॥२८
गन्धामोदितमन्दारतरवः परितस्स्थिताः । परितो वनमध्यस्थं मण्टपं पश्य रत्नजम्॥२९
नियुतस्तम्भसङ्क्लृप्तं पश्य विल्ववनं महत् । अरुणैः पल्लवैर्युक्तं मूले लिङ्गोपशोभितम्॥३०

---

१. वासपटवासक इति पाठः ।

तन्मध्ये मण्टपो भाति सहस्रस्तम्भमण्डितः । महामरतकैः क्लृप्तस्तस्मिन् लिङ्गकुलं मह
सहस्रमिदमुत्कृष्टं शिवप्रेमरसास्पदम् । पश्यैतद्बिल्वमन्दारपङ्कजाङ्कितमस्तकम् ॥३
उद्यत्त्रिपुण्ड्रविलसत्फालभागमनोहरम् । भुजङ्गभोगकलितं कण्ठे मौलौ फणायुतम् ।
मणिद्वीपमहाकान्तिरञ्जितं धूपितं सदा । रत्नपुष्करणीतोयैरभिषिक्तं विलोकय ॥३
दर्शनादेनसां नाशो भविष्यति न संशयः । सुरम्यकेतकवनं पश्योन्निद्रोरुकैतकम् ॥३
वायु[1]रायासबहुलान् सुखयत्येव तद्गतः । मन्दारसुन्दरवनं फुल्लपुष्पोत्थधूलिभिः ॥
सुगन्धमेदुरोऽत्यन्तं मन्दघ्राणैकतर्पकम् । नन्दिकेशालयं पश्य गणलक्षैः परीवृतम् ।
नवरत्नचितानेकरत्नप्राकारगोपुरम् । नन्दीश्वरं सदा नन्दी पूजयत्यतिभक्तितः ॥३
[3]तल्लिङ्गागारमेतद्धि मणीकलशसुन्दरम् । प्राकारं दक्षिणं पश्य नीलकल्पितमुन्नतम् ॥
गोपुरार्बुदसंयुक्तं मणिकुम्भविराजितम् । राजद्गोपुरकोद्भासिरुद्रचारित्रसद्वृषम् ॥४
पश्य चण्डीशनिलयं नानारत्नविचित्रितम् । तत्र चण्डीशनिलयं लिङ्गं चण्डेशपूजि
प्राग्दक्षिणे च लिङ्गानां कोटीनामालयं शुभम् । रत्नगर्भगृहोद्भासि मणिकुम्भोज्ज्वलत
पश्चात्प्राकारनिलयं गोपुरावलिशोभितम् । राजत्प्राकारवृषभैर्मौलिमाणिक्यकुम्भकैः
पश्य मेने भृङ्गिकस्य सदनं मणिकल्पितम् । भृङ्गीशस्यालयं पश्य वरिवस्यापरो ग
भृङ्गीश्वरस्य निलयमत्र पश्य शिवालयम् । नियुतं मणिलिङ्गानां गर्भधामोरुशेखर
रम्यप्रासादमौलिस्थक्रीडामणिसरोज्ज्वलम् । गोपुराग्रमहाकुम्भधारातलविराजि
रम्यं पुष्पवनं पश्य मेने पादपमौलिगैः । पुष्पगुच्छपरागोत्थधूलीगन्धायितोऽद्रि
पश्योत्तरं हि प्राकारं नवरत्नविराजितम् । गोपुरोद्यन्मौलिकुम्भवृषरुद्रचरित्रकैः ॥४
शोभितैः परमोदारतलानां गणनापि न । शिवालयानां गणनां गणितुं नेह जातु
रत्नकुम्भोज्ज्वलकुलं लिङ्गधामोरुवृन्दकम् । पश्येक्षणेन मेनेऽत्र मुक्तपापा भविष्य
सुरत्नपद्मिनी चेयं पश्य चम्पकवाटिकाम् । रत्नचम्पकपुष्पौघै रत्नफुल्लैश्च पङ्कजैः ॥४

स्कन्दः—

इत्युक्त्वा सा जगन्माता मेनया चावतीर्य च । विमानशिखराद्देवी मेनया चावतीर्य

१. आयाति बहुलः इति पाठः ।
२. प्राकारमानीलमिति पाठः ।
३. तल्लिंगाकारमिति पाठः ।

नानावृक्षशतोपेतां रत्नपुष्पविचित्रिताम्। तन्मध्यमणिधाराच्छमण्टपे संस्थिताम्बिका
मेनया च सखीभिश्च कृत्वा पुष्पावसेचनम्।[1] राशीचक्रे पुष्पजालं मणिपुष्पैस्सुगन्धितैः॥
सारत्नमण्टपगता शशिधाममौलिलिङ्गार्चनाय स्वसखीनिचितैश्च पुष्पैः।
सा मेनयाप्यवततार सुपद्मिनीं तां स्नातुं सखीजनवरैस्सरसानुलापैः॥५८॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे देवीविहारो नाम
विंशोऽध्यायः ॥ २० ॥

---

## देवीविहारो नाम एकविंशोऽध्यायः

स्कन्दः—

रत्नपुष्करणीमध्ये सखीभिस्सहिता शिवा। मेनया च जलक्रीडां कृत्वा च करसेचनैः॥
अन्योन्यं स्तनकुम्भेषु कपोलजघनेषु च। धारायन्त्रैश्च सिषिचुस्स्तनपङ्कजकुड्मलान्॥
उत्फुल्लपुण्डरीकांश्च समाजह्रुस्सखीगणैः। नीलोत्पलकुलश्चापि कुमुदं हल्लकं तथा ॥
तत्तीरं तास्समारुह्य चिरं क्रीड्य सरोवरे। दुकूलकूलं तास्सर्वाः परिदध्युस्सखीगणैः॥
मेनयानुगता देवी मेनामभूषयत्। धम्मिल्लमल्लीसरकैः कङ्कतैस्स्वयमम्बिका ॥५॥
अलकालम्बितकचं समीचक्रे स्वमातरि। रोचनाञ्जनसिन्दूरैर्नेत्रफाले चकार सा ॥६॥
तिलकं तन्मुखे देवी स्वयमानन्ददर्शिनी।[2] तत्पदाम्बुजयोर्देवी सरसालक्तपंक्तितः ॥
स्वयं चक्रे महादेवी सख्यश्चक्रुश्शिवां प्रति। अभूषयत्तदङ्गानि रत्नभूषादिभिश्शिवा॥
अभूपयत्कचभरं मेनायास्स्वयमद्रिजा। साङ्गरागं गन्धवरैः पटवासैस्तदाम्बिका ॥ ९ ॥
स्वाङ्गम्मेनाङ्गमप्याशु मण्डयद्वेणिमण्डलैः। नानापुष्पसरापारैर्धम्मिल्लैस्तेऽप्यभूषतुः॥
ततो वनविहारार्थं समुत्तस्थौ सखीगणैः। देवी सा मेनया सार्धं पादसंयोजिपादुका ॥
ययौ वनस्थलीं तत्र पुष्पवृक्षोपशोभिताम्। चम्पकाशोकपुन्नागवकुलैश्चम्पकाम्रकैः ॥
कुटजैश्च धवैः फुल्लकेतकीनां गणैस्तथा। मन्दारपारिजातैश्च कुरवैः पाटलीमुखैः॥१३
शमीशिरीषविल्वैश्च रक्ताशोकैर्मधूककैः। मल्लीवल्लीकुन्दवल्लीजाजीद्राक्षासुपिप्पली॥१४[3]

---

१. पुष्पापसंचयमिति पाठः। २. स्वयमादर्शदर्शिनी इति पाठः।
३. मल्लीमुल्लीकुन्द इति पाठः।

पूगीरम्भावृतापारपर्यन्तैः प्रसृतास्तदा। नीपानोकहजम्बीरजम्बाम्रातकभल्लकैः॥
लोध्रसल्लकवृक्षैश्च फुल्लहल्लकपङ्कजैः। कासारासारमध्यस्थमणिमण्टपमध्यगा ॥
विजहार वने देवी मेनया स्वसखीगणैः। उत्फुल्लारक्तकमलहल्लकान्युज्जहार सा॥
उत्फुल्लचम्पकानाञ्च पुष्पाण्यपचिनोत्तदा। मल्लीकुन्दाच्छवकुलपारिजातसमुद्भवाः
मालाश्चोद्ग्रथ्यपुष्पाणां देवी पक्वफलान्यपि। समाजहारालिभिस्सा वृक्षाधस्थितमत्र
मेनया परया प्रीत्या सखीगणनिषेविता। नारिकेलाम्रपनसमातुलिङ्गेङ्गुदीफलैः॥
करञ्जैः कदलीजम्बूदाडिमीलिकुचैस्तथा। पुण्ड्रेक्षुसारखण्डैश्च नानाभक्ष्यान्नराशिभिः
क्षीरोदनैर्घृतान्नैश्च दध्यन्नैस्सोपदंशकैः। शाकसूपापूपजालैर्दधिक्षीरघृतादिभिः॥
लिङ्गपूजां समारेभे सा देवी मेनया सह। सख्यानीतैर्गन्धपुष्पपञ्चामृतघटीशतैः॥
फलजालैस्तथेक्षूणां सारैः क्षौद्रैस्सशर्करैः। वासोभूषणताम्बूलैर्धूपदीपैर्मनोहरैः॥
दृष्ट्वादर्शे महादेवी त्रिपुण्ड्ररचनादरा। मुक्तान्तरितरुद्राक्षमालाशोभितकन्धरा ॥
मेनया सा ययौ तत्र रम्यं देवीश्वरालयम्। तत्प्राकारमहामौलिगर्भागारैकसुन्दरम्॥
गोपुरोद्भासिमाणिक्यकुम्भैस्सद्वृषभैरपि। शोभितं मण्टपगणैर्धूपदीपालिरञ्जितम्॥
तत्रान्तर्गृहमासाद्य मेनयैक्षि सखीगणैः। शुद्धकर्पूरधवलं मणिबिम्बोत्तमाङ्गकम्॥
हीरत्रिपुण्ड्रसंशोभिचोद्यत्फणिफणावृतम्। सोमार्धशेखरलसन्मणिहारविभूषितम्॥
तल्लिङ्गं वीक्ष्य सा देवी प्रणम्य मणिभूषितम्। देवीश्वराभिधं तत्र देवी सा मेनया युता
पूजयामास [1]विविधैः पञ्चामृतनिषेचनैः। फलसारैश्च विविधैश्चन्दनाम्भोघटैरपि॥
वस्त्रगन्धाक्षतैर्बिल्वैः पुष्पमालाभिरीश्वरी। धूपैर्दीपैश्च विविधैरानीतैर्भक्ष्यभोज्यकैः॥
अन्धसां राशिभिर्देवी निवेश्य परमेश्वरी। ताम्बूलानां भरैर्देवी प्रदक्षिणनतिक्रमैः॥
स्वसखीजनसङ्घुष्टवाद्यनाट्यनिषेवितैः। सम्पूज्य सा महादेवी देवीशं मेनया सह ॥
लिङ्गाग्रे सन्निवेश्याम्बा रुद्रवीणाकरा तदा। नखोद्घुष्टमहातन्त्रीगानरक्तानुगुण्ठतः॥
तुष्टाव स्तोत्रवर्येण तदा देवीश्वरं शिवा॥ ३६ ॥

देवी—

पुरहर भगवन्कुरु करुणां स्मरहर शङ्कर प्रभो।

---

१. विभवैरिति पाठः।

गरधर गुरुभरजगदुद्धारक मुरहरपूजितपाद ॥ ३७ ॥
गजहर यमहर [1]भग मखहर हरिशर हर हरपाहि ।
अगपतिविलसितलिङ्गकुलान्तरभरितानेदकमोद ॥ ३८ ॥
परिफुल्लाम्बुजविल्वालङ्कृत शशिधामोन्नतमौले ।
परिपाहीश्वर शङ्कर सुन्दर भक्तजनप्रिय शम्भो ॥ ३९ ॥
[2]उद्यद्धिमकरसमसुमजाधिकमारवराङ्गकभूष ।
भसितालङ्कृतनिटिलालङ्कृतपुण्ड्रोत्तमपरिभूष ॥ ४० ॥
चक्षुश्श्रवगणमणिगणकन्धर सोमार्यमानलाक्ष ।
तुरगायितनिगमाव्यय हर श्रुतिमौल्युन्नतकीर्ते ॥ ४१ ॥
परिपाहीश्वर देव दयाकर भगवन्नव मां दीनाम् ।
पुरहर मुरहरपूजितपाद शङ्करहरहरशम्भो ॥ ४२ ॥
गङ्गाधर हर गरकन्धर हर काकोदरवरहार ।
परिपाह्यद्य निशाकरलोचन दयया सुतरां गिरिवास ॥ ४३ ॥

स्कन्दः—

इत्थं सा गानधाराभिस्तुष्टवाष्टाकृतिं हरम् । तद्गानधारां सा श्रुत्वा मेना विस्मायितान्तरा
चित्रार्पितेव सा तस्थौ तत्र तस्यास्सखीगणः। तन्त्र्यातिशायिकण्ठोत्थरक्तिरागैकमेदुरम्
[3]रागानुसारं शुश्रावमतिगान्धर्वमुत्तमम् । सञ्जातपुलका स्नापिन्येवं पङ्कजकुड्मलैः॥४६
उन्मेषनिमिषैर्हीनास्ताः पश्यन्त्यालयेऽम्बिकाम् ।
विसृष्टगाना सा देवी नृत्यं लिङ्गाग्रतः कृतम् ॥ ४७ ॥
सखीभिर्जातहर्षेण मेनयापश्यदीश्वरी । तदालयात्तटं प्राप्य देवगङ्गामणिद्युति ॥४८॥
तन्मध्यमण्टपे तस्थौ नवरत्नविचित्रिते। भोजयामास सा देवी निवेदितमुमापतेः॥४९॥
[4]भक्ष्यान्नं राशिदध्यौदैर्मेनाञ्च स्वसखीगणम् । स्वयञ्चापि महादेवी बुभुजे षड्रसान्वितम्

१. भगरदहर इति पाठः ।
२. उद्यद्दिनकर इति पाठः ।
३. रागानुरागमिति पाठः ।
४. भक्ष्यान्नन्दध्योदनकैरिति पाठः ।

रत्नपात्रपरीकुप्तैर्नानाभक्ष्यान्नमुत्तमम् । खाद्यैः पेयैश्च मधुरैः पानीयैश्शीतलैश्शिवा।
स्वर्णभृङ्गारुकलितैः पाटलागरुगन्धितैः ॥

देवी—

अहो धन्ये महामेने शिवनैवेद्यमीदृशम् । पापजालैकसंहारि चास्वादय सुधाधिकम्
भक्ष्यं भोज्यं तथा पेयं दध्यन्नमिदमुत्तमम् । गृहाण सोपदंशानि पानानि विविधानि
रसवन्त्यश्च सुभगे शिवनैवेद्यमुत्तमम् ॥ ५४ ॥

स्कन्दः—

इति तां भोजयामास रत्नपात्रैस्सखीगणम् । देवगङ्गासरित्तीरे सोपानतटमण्टपे ॥
देवी प्रक्षाल्य हस्तौ च मण्टपे सा वरासने । मेनया संस्थिता देवी ताम्बूलैस्सुमनो
मुखवासैस्सुधूपैश्च स्रग्गन्धाभरणार्पणैः । विश्राणयत्तदा मेनां स्वसखीगणमुत्तमम्
स्वयं चाभूषयद्गात्रं दिव्याकल्पैर्महेश्वरी । दिव्याङ्गरागभूषैश्च पुष्पैर्वस्त्रैश्च भूषिता ॥
स्वसखीकल्पितापारवेणुवीणामृदङ्गकैः । दिव्यनाट्यसमारम्भैर्निनाय दिवसं क्षणा
रत्नकन्दुकलीलाभिरक्षक्रीडारसैश्शिवा । कदाचिद्वनमध्यस्थवृक्षालम्बनमञ्चकैः[1] ॥
मेनया सा प्रमुदिता वनमण्टपमध्यगा । धारोच्छ्रायगृहे देवी चण्डांशुकरतापिता ॥
मयूरशुकशारीककलहंसांश्च पश्यती । रत्नदण्डामलैर्देवी चक्रे हल्लीसलास्यकम् ॥
मेनया स्वसखीभिश्च वृक्षान्दोलैश्च शङ्करी । मणिद्वीपे कदाचित्सा मेनया विजहार
सुधासागरमध्यस्था नौकाक्रीडादिभिश्शिवा । क्षेपिणीक्षेपितजलैस्सखीभिर्गानथा
स्वयं रुद्रमहावीणां गृहीत्वा गानधारया । शिवनामानि गायन्ती तोषयामास मातरं
उद्यच्छशाङ्कधवलरत्नप्रासादमौलिगा । रत्नमञ्चेषु सा देवी पुष्पप्रस्तरकेषु च ॥
चन्द्रचन्दनलिप्ताङ्गी मेनया वीजिता तदा । सखीभिस्सेविता देवी नानासेवारसैस्त
शयाना पुष्पपर्यङ्के देवी रात्रिमनीनयत् । एवं नानाविधाः क्रीडा देव्या हर्षोरुधारया
कैलासे च मणिद्वीपे ह्युवास चिरमम्बिका । मेनया सा सखीभिश्च प्रमोदानन्दनिर्भरा

१. वृक्षलम्बनमेचकैरिति पाठः ।

वर्षाणां शतकं सदा गिरिवराज्जाता सखीभिस्सुखं
सा मेनां नगराजमूर्धनि शिवा दिव्याङ्गरागैस्सुमैः ।
भक्ष्यैर्भोज्यरसैस्सदारसभरैः क्रीडादिभिस्तोषय-
द्विश्वेशानुमतेन भाग्यनिवहैर्देवी सखीनां गणैः ॥ ७० ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे देवीविहारो नाम
एकविंशोऽध्यायः ॥ २१ ॥

---

## हिमाचलाय कैलासदर्शनन्नाम द्वाविंशोऽध्यायः.

स्कन्दः—

एवं देव्या पूजिता सा मेना धन्यमनोरथा। देव्या क्रीडारसभरैर्विहारशयनाशनैः॥ १॥
निनाय दिवसांस्तत्र कैलासे नन्दिता भृशम्। भूधरोऽपि स मैनाकः पूजितश्शङ्करेण हि
रत्नसौधे महामञ्चे भक्ष्यभोज्यैश्च पर्वतः। स्रग्गन्धवासस्ताम्बूलैर्गणानां पूजनैस्तथा ॥
वाग्भिस्सम्भावयामास नित्यं हर्षोरुधारया। फलं मूलं तथैवान्नं वासो गन्धसुमादिकम्
यद्यत्प्रियकरं शम्भोः प्रियं देवी च सा मुदे। पर्वतेन्द्राय सा देवी प्रेषयामास मोदिता ॥
शिवस्यानुमतेनैव नित्यं वृद्ध्या सुखोदकैः। एवं देव्या च देवेन हिमवान्भूधरोत्तमः ॥
पूजितो मेनया सार्धं मैनाकेन तदा गिरिः। नानाहारविहारैश्च प्रीत्या तत्रानुमोदितः ॥
एकदा सन्निधिं प्राप्य शम्भोस्तत्र गिरीश्वरः। तुष्टाव देवं देवीश्च कैलासे शङ्करालये ॥

हिमवान्—

दिक्चेल फालतिलकानल कालकाल व्यालेन्द्रमाल गरनील कराब्जशूल ।
लीलाकृताङ्ग निखिलागमतत्वमूल वालार्धगात्र मुनिवालकृतालवाल ॥ ९ ॥
तिग्मांशुशीतांशुजहव्यवाहनेत्रोज्वलन्मदनकाय उमासहाय ।
भूदारदार नरसिह्मविदारणेश दैत्योरुसिन्धुरकटीतटचर्मवस्त्र ॥ १० ॥
गङ्गातुङ्गजटोरुशेखर सुधाधामार्धखण्डोज्वल
स्थूलापारद्विजिह्वहारवलय प्रोद्यज्झणन्नूपुर ।

10 B

उक्षेन्द्रोत्तमवाहनाव्यय हराधारोरुसंस्यन्दन
सोमार्यम्णकचक्रकर्षण महावाहार्ववेदोत्तम ॥ ११ ॥
शम्भो मे दिश भद्रमद्य दयया मां पाहि सर्वेश्वर
पाथोजातभवोत्तमाङ्गहरणापारव्यथां संहर ।
पद्मोत्थापतिनेत्रपद्मनिवहापारार्चिताब्जाङ्घ्रिक
भूधृग्धुर्यशरासनोरुविहितामौर्वीमहीधारक ॥ १२ ॥
पाह्यद्रीश्वरमौलिलिङ्गवसते शम्भोमृडानीपते ॥ १३ ॥
कुलाचलशरासनं कुलिशपाणिभोगप्रदं
कुजापतिशरोत्तमं कुसुमबाणदग्धाङ्गकम् ।
कुलीरकवरप्रदं कुटिलसौरिदर्पापहं
कुसीदजनदूरगं कुमतिदुःखदं त्वां भजे ॥ १४ ॥

स्कन्दः—

तत्स्तुतिं स शिवश्श्रुत्वा हर्षनिर्भरमानसः। उवाच नन्दिनं वीक्ष्य देवदेवोऽद्रिजासखः
प्रणमन्तश्च शैलादिं स्वर्णवेत्रलसत्करम् ॥ १५ ॥

ईश्वरः—

भूधरेन्द्रेण गच्छ त्वं विमानेनार्करोचिषा। दर्शयास्मै मदीयोऽयं कैलासस्सशिवालयः
नग्लानिर्नश्रमो वा स्यात्तत्तथा संविधीयताम्। गच्छतो मेनया सार्धं मैनाकेन नगेशितु

स्कन्दः—

इति शम्भोर्वचश्श्रुत्वा नन्दिकेशः कृताञ्जलिः। हिमाचलं समैनाकं गृहीत्वा करपल्लवैः
अत्यर्कं सुविचित्रं च पताकावलिभासुरम्। पुष्पमालापरिक्षिप्तं मुक्तामालापरिष्कृतम्
फलपुष्पाम्बुसंयुक्तं भक्ष्यभोज्यसमन्वितम्। मृदङ्गमुरजोद्घुष्टं रुद्रकन्यावृतं तथा॥२०
गणतौर्यत्रिकापारविनादितदिशामुखम्। शिवाज्ञया गिरिवरं रत्नसिंहासने वरे॥ २१
उपवेश्यासने नन्दी समैनाकं स्वयं तदा। रत्नसिंहासने विप्रगणवृन्दैस्समन्वितः॥
दर्शयामास शैलेन्द्रं गणेन्द्रो भूधरं तदा। प्राह प्रालेयशैलेन्द्रं नन्दी नन्दितमानसः॥

१. अन्यसिंहासने इति पाठः।

नन्दिकेशः—

पश्य धन्येन नेत्रेण कैलासं शङ्करस्य हि। यत्रैकं वा शिवागारं तत्क्षेत्रं योजनायुतम् ॥
तत्रैव वसतां पुंसामपि कीटपिपीलिकम्। मुक्तिरीशप्रसादेन पश्यतां पापनाशनम् ॥
अत्रानन्तशिवागारे मौलिकुम्भैकदर्शनात्। न जाने महिमां वक्तुं शिवोजानाति नेतरः
कैलासं शङ्करावासं नानाद्रुमलतायुतम्। रत्नपुष्करिणीफुल्लसरोजकुलसङ्कुलम्॥ २७॥
नानावल्लीवेष्टितोरुवनस्पतिशतायुतम्। नानापक्षिरुतापारवननिर्झरकन्धरम्॥ २८॥
मृगेन्द्रसिन्धुरेन्द्रादिचमरीमहिषावृतम्। कोकिलाकाहलीगानशुकशारिकसारसैः ॥
कुरराक्रन्दबहुलं हंसनादविनादितम्। नगमौलिगतोत्तुङ्गसालतालद्रुमाकुलम्॥ ३०॥
सुरम्यबन्धुरामोदपुष्पकिञ्जल्कमारुतम्। पुष्पगुच्छभरालोलमारुतामलभूतलम्॥ ३१॥
तलशोभितपुष्पौघफलतारायितोत्तमम्। प्रभातवातपोतोद्यच्छ्रीतलायितभूतलम्॥ ३२॥
द्रौणिजालम्बिसक्षौद्ररसाक्तससुधाङ्गणम्। भ्रमद्भ्रमरझङ्कारमधूकोद्दामगन्धिनम्॥ ३३॥
केतकीपुष्पसौरभ्यसुगन्धायितदिक्तटम्। कुरबोद्दामगन्धोद्यच्चन्दनानन्दिताननम् ॥
तिलकायितदेवद्रुमौलिस्थतिलकैर्युतम्। वातपोतमुखाहारवल्मीकोत्थितपन्नगम्॥ ३५॥
करटीकटधाराद्रींकृतगन्धितभूतलम्। रोमन्थफेनविन्दूद्यन्महिषीणां गवां तथा॥ ३६॥
ऊधोनिर्यत्पयःपूरपङ्किलायितभूतलम्। तत्पङ्कपंक्तिसंलग्नवरैणखुरभूतलम् ॥ ३७ ॥
मुस्ताम्रेडनकोद्धुष्टकोलदंष्ट्रोत्थितोपलम्। गौरिकापीतहरितरक्तमाञ्जिष्ठधातुभिः॥ ३८॥
स्रवन्तं रीतिभिश्शैलं गजेन्द्रमिव च त्रिधा। उत्तुङ्गशिखरापारशृङ्गैरुल्लिखिताम्बरम् ॥

स्कन्दः—

दर्शयामास नन्दीशो नगराजायतन्नगम्। कैलासं कलधौतोद्यद्रम्यकान्तिविराजितम्॥
प्राह तं नन्दिकेशोऽपि शिखरीन्द्रं शिवाज्ञया ॥ ४१ ॥

नन्दिकेशः—

पश्य शैलं महाशैल महेशस्य दृशा तव। पश्य पश्येदमतुलं प्राकारं वरगोपुरम्॥ ४२॥
नानागोपुरसौधैश्च मदालयमिदं ततम्। [1]विकेशस्येदमतुलं गृहं शम्भोर्वरालयम्॥ ४३॥
एष रत्नगिरिर्भाति रत्नकान्तशिलोच्चयः। तत्र रत्नाग्रशिखरः प्रासादोऽयं महेशितुः ॥

१. अम्बिकेशाख्यमतुलमिति पाठः।

उद्यत्पताकारुचिरो रत्नतोरणमण्डितः। हरिन्मणिमयो भाति सहस्रस्तम्भमण्टपः॥
मध्यशैलं सदा भाति हरमानसमोदभूः। कोटिलिङ्गालयानाञ्च शिखराण्यपि पश्य
दर्शनेनापि पापानां प्रलयोऽद्य भविष्यति। एष दक्षिणतो मेरोः प्राकारो मणिकल्पि
चण्डीश्वरालयं पश्य रत्नसौधवरान्वितम्। चण्डीश्वरेशशिखरं पश्य तच्च नमस्कुरु॥
लिङ्गायुतमहासद्मप्रोद्यत्कुम्भैकभासुरम्। पश्यशैलेश्वरापारगोपुराणां तलान्यपि॥
सुरत्नपद्मिनीचेयं रत्नसोपानमण्टपैः। परितः परिवीता च रत्नकुण्डलहल्लकैः॥ ५०
मणिजैररविन्दोद्यत्परागरसरञ्जिता। कैलासेशस्य शिखरं पश्य भूधरनायक॥ ५१
उद्यत्पताकाकलशरत्नगोपुरभासुरम्। अत्र स्वयं महादेवस्सम्पूजयति सर्वदा॥ ५२
तल्लिङ्गं वरिवस्यातो हर्षतो देवनायकः। प्रदोषेषु विशेषेण पश्यन्नृत्तोरुमण्टपम्॥ ५३
अभ्रंलिहैर्मस्तकुम्भैर्विशालैर्मणिभासुरैः। सुरम्यरत्नवेदीभिः परितः परिवेष्टितैः॥ ५४
अत्र देवीं समावेश्य रत्नसिंहासने शिवः। मणिरङ्गे सदा सायं नृत्यत्यानन्दनिर्भरः
मया च गणनाथेन स्कन्देन गणपैर्वृतः। वेणुमद्दलमड्डूत्थतालकाहलनिस्वनैः॥ ५६
सभाः पश्यात्रविततां मणिमौलिपताककाः। सहस्रस्तम्भसंयुक्ताश्चतुर्दिक्षु मनोहराः
सौवर्णी राजती चापि चित्सभात्र महेशितुः। अन्यारत्नसभाचेयं रत्नापारैककान्तिसु
सायं नृत्यति देवेशो देव्यग्रेऽत्र सभासु च। रम्यं सहस्रलिङ्गानामिदमालयमुत्तमम्॥
उद्यद्दिवाकरप्रख्यं कुम्भजालकिताम्बरम्। पश्यात्र देवदेवस्य कोटिस्तम्भोरुमण्टप
धूपदीपमणिज्योतिरुद्राक्रीडनमुत्तमम्। मौलिजालकमध्यस्थमणिकुम्भोज्ज्वलद्ध्वजम्
सुरम्यवापिकाचेयं सुधाकल्लोलमालिनी। देवगङ्गातटं पश्य लिङ्गसौधोरुमण्टपा॥ ६२
सुधासागरगा चैषा गङ्गा कैलासमौलिगा। पञ्चवक्त्रेश्वरस्यापि सभां पश्य मनोहरा
रत्नकुम्भमहाकान्तितिरस्कृतदिवाकराम्। तल्लिङ्गपञ्चवक्त्रोत्था नद्यः पञ्चाद्य सुसु
शिवगङ्गा देवगङ्गा रत्नगङ्गेति विश्रुताः। कैलासगङ्गा शैलेन्द्र मधुगङ्गेति च क्रमात्॥
सर्वास्तास्तीरबद्धोरुमणिसोपानमण्टपाः। परितश्शोभितापारशिवसौधविराजिताः॥
लिङ्गसद्ममहाकुम्भबिम्बितोत्तुङ्गनीरकाः। रत्नकर्कटमत्स्यैश्च पद्महंसैककोककाः॥ ६७
नीलोत्पलामलमणिप्रासादोरत्नरञ्जितः। उद्यत्कुम्भस्सदाभातिदिव्यसिंहासनाश्रित

१. पदवीनांचेति पाठः।

रत्नेश्वरालयं पश्य नवरत्नविचित्रितम् । पश्य बिल्ववनं शम्भोर्नवारुणदलान्वितम् ॥
तन्मूलमणिलिङ्गोग्रद्धारारसविजृम्भितम् । कल्पवाटीमिमां पश्य रत्नवेदिकचित्रिताम् ॥
कन्दलेशालयं पश्य शैलात्र सुमनोहरम् । कुल्याश्चात्र प्रपश्यात्र मधुक्षीरघृतस्रवाः ॥
देवीश्वरालयं पश्य सदा देव्याः प्रियङ्करम् । तत्र सालवनं पश्य परिच्छदफलावृतम् ॥
विलोकय दृशा शैल पश्चिमे गोपुरं स्थितम् । सहस्रतलसंयुक्तं गवाक्षवृषभैर्युतम् ॥ ७३ ॥
रम्योत्तुङ्गमणिद्योतिशिखराग्रपताककम् । उग्रेश्वरालयं पश्य चोग्रपातकनाशनम् ॥
भृङ्गिसौधोऽयमतुलो बाणस्यात्र गृहं महत् । हरिकेशालयं पश्य पश्य स्कन्दालयं महत् ॥
अम्बिकेशस्य शिखरं पश्य प्रणतिगो नग । नवरत्नमहाशैलान्पश्य सौधोत्तमैर्वृतान् ॥
उत्तमेशमहाधाम पश्यात्र सुमनोहरम् । गर्भेशगर्भभवनं पश्य कुम्भैकभाततम् ॥ ७७ ॥
मण्टपं दशसाहस्रस्तम्भकुम्भविराजितम् । कैलासनलिनी चेयं रत्नफुल्लाम्बुजावृता ॥
तन्मध्यसौधगर्भस्थमणिमश्वं प्रपश्य भो । कुलिशेशालयं पश्य पापाद्रिकुलिशं हि तत् ॥
कुलशैलप्रपश्याद्य चन्द्रकान्तशिलातलम् । सहस्रयोजनायामं तत्र चन्द्रेश्वरालयम् ॥
कुलाचलमहासौधान्प्रपश्य नगसत्तम । अयुतं लिङ्गसदनं मदनान्तकरप्रियम् ॥ ८१ ॥
आलोकय महाशैल शैलेशस्य वरालयम् । क्षीरोदवापिका चेयं रत्नसोपानमण्टपा ॥
क्षीरेश्वरालयं तीरे तस्याः पश्य मनोहरम् । मयूरेशस्य सद्मैतद्वनगर्भे विलोकय ॥ ८३ ॥
रिटिरास्तेऽत्र सौधे तु चाज्ञया शूलिनो नग । पूर्वतोऽहं दक्षिणतश्चण्डी भृङ्गी रिटिस्तथा
पश्चादथोत्तरे शैल चन्द्रचूडस्य शासनात् । पालयामो गणौघैश्च सदा शूलवरायुधैः ॥

एतल्लिङ्गकुलं त्वपारमणिजैस्सौधैश्च सद्गोपुरै
रम्योत्तुङ्गनिखातसागरमहाप्राकारभूभृद्गणैः ।
फुल्लाब्जैस्सरसीगणैस्सुमवनैः क्लृप्तोऽद्य वै भूधरो
विश्वेशेन विचित्रचित्रमनसा सम्पश्य शैलोत्तम ॥ ८६ ॥
ताराराजविराजितोरुशिरसो वासो ह्ययं शैलरा-
ड्राजद्राजतकान्तिसारनिवहैश्श्रीविप्रराजाधिकः ।
राजल्लिङ्गगणै रराज भुवने विश्वेश्वरस्याज्ञया
राजद्राजसखस्य राजति परं शैलाधिराजेक्षया ॥ ८७ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे हिमाचलाय कैलासदर्शनन्नाम
द्वाविंशोऽध्यायः ॥ २२ ॥

## हिमालयस्य कैलासदर्शनन्नाम त्रयोविंशोऽध्यायः.

नन्दीश्वरः—

गणेश्वरस्य सदनं पश्य कुम्भविराजितम् । हीरसौधमिमं पश्य चात्यर्कच्छदसुन्
पाटलीनां वनं पश्य बहुधामोदगन्धितम् । पाटलीशागारमेतत्पापपाटनचञ्चुरम्॥
स्वर्णतालीवनं पश्य यत्र घर्घरमारुतम् । तालेशशिखरं भाति दधिकल्लोलिनी लि
मुञ्जिकेशक्षयं पश्य पश्य नागेश्वरालयम् । विघ्नेशस्य निवेशश्च पश्य सोमेश्वरा
शरणं शरणं शम्भो पुन्नागवनमध्यगम् । विल्वेश्वरस्य शिखरं पश्य विल्ववनान्तं
गन्धवर्णेशशिखरं पश्य सालवनं महत् । दशसाहस्रगम्भीररत्नस्तम्भोरुमण्टपः ॥
सिद्धेश्वरालयं पश्य पश्य रुद्राक्षकाननम् । रुद्ररूपमहावृक्षैर्युतं पापभयापहम् ॥ ७
भस्माधारसरश्चापि पश्यात्र कुमुदोज्ज्वलम् । भस्मेश्वरालयं पश्य दर्शनात्पापभस्म
गन्धशैलोरुशिखरे पश्य गन्धेश्वरालयम् । चन्दनानां वनं पश्य नयनानन्ददायक
घृतकुल्यामिमां पश्य तस्माच्छघृतगन्धिताम् । घृतेशधाम पश्यात्र नगेश्वर दशोर्ध्व
त्वं कृतार्थीकुरु क्षिप्रं क्षिप्रेशालयलोकनात् । उत्तरं गोपुरं पश्य महावृषभशेखरम्॥
गरुडोद्गारिरत्नाच्छमण्टपं पश्य भूधर । पुष्परागोत्थशिखरं पश्यागरुवनं महत्॥ १
देवदारुवनं पश्य देवदारेश्वरालयम् । कालाग्निरुद्रसदनं पश्यात्र सुमनोहरम् ॥ १
गन्धर्वेशालयं पश्य वेदेशशिखरं महत् । तरणीशालयं पश्य पद्मगर्भेश्वरालयम् ॥ १
सुधाविपिनमप्यत्र पश्य खर्जूरिकावनम् । पूगीवनमिदं पश्य [1]देवापर्णालयं नग ॥ १
भैरवेशालयं पश्य मणिखण्डेश्वरालयम् । सुधावापीयमतुला सुधया पूरितात्र तु ॥ १
श्रीमहेशेन करुणाकटाक्षरसवीक्षणात् । तत्तीरे पश्य सुभगं सुधाधामेश्वरालयम्॥ १
अमृतेशालयं पश्य कूपः पापविनाशनः । जटेश्वरस्य शिखरं पश्य नन्दनकाननम्
पश्याम्रवनमेतद्वै तरुणारुणपल्लवम् । आम्रेश्वरालयं पश्य पश्य लिङ्गशताष्टकम्॥ १
विल्वमन्दारसन्मौलिफणीफणविराजितम् । मणिगर्भगृहान्तस्थं त्रिपुण्ड्रोज्ज्वलफा
उद्यदर्ककरप्रख्यं शिवप्रासादमीक्षय । कुरुविन्दमणिस्तम्भमणिमण्टपमीक्षय ॥ २
पिप्पलेशालयं पश्य पश्याशोकवनं महत् । विशोकसदनं पश्य पश्य मन्दारकानन

१. देशपर्णालयमिति पाठः ।

ग्रुकेश्वरस्य सदनं पश्याद्य वरभूधर । दशेशस्य महासद्म पश्य प्रासादकेश्वरम् ॥२३॥
उरगेशालयं पश्य चेशानसदनं महत् । रुद्रेशस्यालयं पश्य पारिजातवनं महत् ॥२४॥
रत्नप्रासादशिखरं पश्यात्र सुमनोहरम् । गिरिकेशालयं पश्य हरिकेशवनं नग ॥ २५ ॥
सरोवरं त्वं पश्याद्य सागराख्यमिदं नग । सागरेशस्य शिखरं पश्याद्य सुमनोहरम् ॥
उत्पलेशालयं पश्य कुमुदेशालयं ततः । हंसेश्वरमहाधाम धाम भद्रेश्वरस्य च ॥ २७ ॥
तत्प्राकारस्य सौधाग्रं पश्यैतद्वृषलाञ्छितम् । मणिज्योतीश्वरं पश्य मौलिं कामेश्वरस्य च
मधूकखण्डमप्यत्र द्राक्षावल्लीवनं ततः । कैलासगङ्गां तत्रैव वीक्षयाद्य नगोत्तम ॥ २९ ॥
तत्प्रान्तार्बुदलिङ्गानांसौधमालांविलोकय । कुम्भावलीमिमांपश्यदर्शनात्पापनाशिनीम्
तमालवनमध्यस्थं मालीशशिखरं दृशा । पश्य त्वं सुन्दरेशस्य कपर्दीशालयं तथा ॥
पक्षेश्वरस्याभयदं पापभक्षेश्वरस्य च । वनेशोऽयं मतङ्गेशः प्लक्षेशोऽयं द्रुतीश्वरः ॥ ३२ ॥
शिखरं विनतेशस्य वसतीशस्य लोकय । एलावनमिदं पश्य रत्नगुच्छैर्विराजितम् ॥
कुलाचलानां सौधोरुलिङ्गकुम्भान् विलोकय । तवधाममहामौलिलिङ्गश्च हिमभूधर ॥
तत्पुरस्ताद्रत्नभूमिस्सुधासिन्धुर्विराजते । तरङ्गमालाविततस्सुधापिण्डोरुफेनवान् ॥
तन्मध्ये च मणिद्वीपश्चाकचक्यैश्चकास्ति वै । मणिद्वीपोऽयमतुलश्श्रीपुरं तत्र राजते ॥
मणिद्वीपेशशिखरं मध्ये पश्य नगोत्तम । मणिगङ्गातटं पश्य मणिगङ्गा सुधाब्धिगा ॥
करञ्जवनमध्यस्थं करञ्जेशशिवालयम् । एवं शताष्टौ प्राकाराश्श्रीमहेशेन कल्पिताः ॥
कैलासमौलौ वितता रत्नलिङ्गालयैस्सह । तत्रान्तरे च भवनं स्कन्दस्य गणपस्य च ॥
स्कन्देश्वरस्य शिखरं पश्य विघ्नेश्वरस्य च । देव्यान्तस्सदनं तत्र मणिसौधं विलोकय
नानास्कन्दगणास्तत्र विघ्नेशस्य महागणाः । शक्तिपाशाङ्कुशकरास्तत्र प्राकाररक्षकाः
नवलक्षं पञ्चलक्षं ताभ्यां तत्रैव रक्षितम् । सद्योजातो वामदेवस्तत्पूर्षोऽघोर एव च ॥
ईशानस्तत्र चान्तर्हि प्राकारपरिरक्षकाः । स्वगणैस्तादृशैरेव प्रत्येकं लक्षसङ्ख्यया ॥
स्वनाम्ना स्थाप्यलिङ्गानि दिव्यधामगतानि ते । सदापचितिभिस्तत्र पूजयन्ति विलोकय
तन्मौलिकुम्भजालानि वीक्ष्य तानि नमस्कुरु । एवं तत्रान्तरेऽप्यन्याः पञ्चविंशतिमूर्तयः
पञ्च पञ्चान्तरास्तत्र प्राकारपरिरक्षकाः । स्वनाम्ना स्थाप्य लिङ्गानि कैलासामलपर्वते ॥
तत्रान्तरे महादेव्या वसतिश्शिवकल्पिता । नास्माकं प्रसरस्तत्र नानामणिगृहान्तरे ॥

सख्यस्तत्र महादेव्यास्सञ्चरन्ति गृहान्तरे। तत्र लिङ्गोरुसद्मानि मणिकुम्भोज्ज्वला
तत्र देव्या महादेवो विहरत्येव निश्चितम् ॥ ४९ ॥

स्कन्दः—

इत्थं नन्दीशवाक्येन सन्तुष्टः प्राहभूधरः। समुद्यत्पुलकस्सास्त्रो धन्यं मन्ये दृशो

हिमवान्—

कैलासमौलिवरलिङ्गसुरत्नधामकान्तोरुकुम्भकलनेन नयामि जन्म।
अत्रैव वासमभिरोचयते मनो मे सत्यं ब्रवीमि गणपेन्द्र नमो नमस्ते ॥ ५१॥

धन्ये मे नयने जनुश्च सफलं धन्यो गिरीन्द्रोऽप्ययं
यस्यापारशिखाश्रयो हि भगवान्लिङ्गाकृतिश्शङ्करः।
प्राकारेषु च गोपुरेषु विपिने रुद्रावतारः प्रभु-
श्चास्ते सौधवरेषु देवतिलकः कस्तस्य ब्रूते गुणान् ॥ ५२ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे हिमालयस्य कैलासदर्शनन्नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## हिमालयस्य कैलासदर्शनन्नाम चतुर्विंशोऽध्यायः

नन्दिकेश्वरः—

प्राच्यां पश्य नगश्रेष्ठ श्रेष्ठोऽयं धरणीधरः। निष्टप्तकनकाकारो नानासुरवराश्रयः
सहस्रशिखरापारकान्तिकाञ्चितदिक्तटः। वृषस्तम्भनिभो भाति कैलासाग्रे नगो
पश्य तान्परिघाकारान्त्संसमुद्रान्त्सनदीनदान्। पश्य द्वीपान्महाशैल समुद्रेषु वि
विपिनावनिजातानांप्रासादानाञ्चमौलयः। प्रोद्यत्पताकाराजन्तिमणिकुम्भाग्रशो
एष नीलस्तथा विन्ध्यो मन्दरो दर्दुरो नगः। सुमाली केतुमालश्च भद्राश्वौ तत्र
रैवतश्शतशृङ्गश्च मणिवभूश्च पिङ्गलः। उदयश्चक्रवालश्च मैनाको यमधुर्गिरिः ॥
अस्ताचलः पारियात्रो निषधः कन्दलाचलः। तव मूर्तिरियं शैली मौलिकेदारलि
न्वमत्यन्तमहाशृङ्गैरुपेतोऽसि महानग। त्वत्तो मानुषगङ्गेयं निर्गता लिङ्गरङ्गिता
भगीरथस्य तपसा प्लावयन्ती च भूतलम्। अन्या विक्रमतो विष्णोः पादतो निर्ग

गङ्गाद्वारात्प्रतीच्याब्धि सङ्गता मालवानिमे। इयं गर्वभराक्रान्ता चेशानशशिमौलिना॥
जटाकोटीरनिलयां चक्रे सा च विसर्जिता। देवैस्सम्प्रार्थितो देवस्तां भूमौ परिमुक्तवान्
आनन्दकाननं प्राप्ता चक्रतीर्थे सरिद्वरा। तत्तीरे पश्य सुभगं विश्वेशशिखरं महत्॥
भारते भूमिसर्वस्वखण्डे वै जाह्नवी यतः। अविमुक्तं प्रपश्याद्य मृता यत्रापुनर्भवाः॥
विमुक्तिं दास्यते देवो यत्र विश्वेश्वरस्स्वयम्। तत्पश्चात्सागरप्रान्ते कुरुक्षेत्रं प्रभासकम्
रुद्रकोटिः पुष्करश्च गंगाद्वारं पवित्रकम्। पिण्डारकं कालजरं तापितीरे मनोहरम्॥
यत्र पाशुपतो योगी मुनीनाञ्चोपदेशतः[1] देवदेवेन तत्रैव पश्यैतन्मणिकुम्भकम्॥१६॥
श्रीशैलशिखरं पश्य पश्य त्र्यम्बकभूधरम्। क्षिप्रातीरे महाकालं कामदं वैद्यनाथकम्॥
पश्चात्तथोत्तराश्चेमे कुरवः पश्य भूधर। ताम्रस्वर्णमयी भूमिस्तत्र द्वीपे घृतोदधौ॥
स हि किंपुरुषावासः पुरुषास्तुरगाननाः। शिलानदीमिमां पश्य तत्प्रान्ते काकवक्त्रकाः
पुरुषाणां प्रवेशोऽत्र तावदेव नगोत्तम। मरुभूमिस्ततो द्वीपौ शाकक्रौञ्चौ मनोरमौ॥
कुशकाशौ ततः प्राच्यां क्षीरोदेनावृतौ नग। देवभूमिस्ततो रम्या दध्योदे परिकल्पिता
चक्रवालो गिरिःप्राच्यांतत्प्राच्यामुदयाचलः। पश्चादपिप्रपश्येमांभूमिंस्वादोदधीवृताम्
स्वर्णारं पश्य सुभगं वरुणावासमुत्तमम्। शोणो नाम नदो विप्र प्रतीच्यां वहते नग॥
रम्यसालवनप्रान्ते गन्धर्वाणां प्रमोदभूः। अस्ताचलावधि नग तत्प्रान्ते शल्मलीद्वीपः
दक्षिणे भारते वर्षे जम्बूनाम नदी सदा। प्रत्येव नियतं तस्यां द्वीपं जाम्बूनदं स्मृतम्
देवभोग्यं महच्छैल निष्टप्तकनकं हि तत्। प्रतिष्ठानपुरं पश्य करहट्टपुरं तथा॥ २६॥
करवीरपुरश्चापि पश्य विन्ध्यनिवासिनीम्। पश्य वेणुवनं पुण्यं नागनाथशिवालयम्॥
ओङ्कारं नर्मदातीरे कुण्डश्चोङ्कारनामकम्। आवाटकमिदं[2] पश्य पश्यैतद्धुस्टणेश्वरम्॥
नैमिषं पश्य विपुलं विशालं वदरीमनु। गोदाश्च नर्मदाश्चैव वाहुदां कृष्णवेणिकाम्॥
नीरांपयोष्णींपश्यागनीरजावलिभासुराम्। कालिन्दीगङ्गयायुक्तायत्रवेदीप्रजापतेः॥
प्रयागवनमेतद्वै चित्रकूटगिरिस्ततः। शूलटङ्कालयं पश्य गयाश्च पितृतृप्तिदाम्॥३१॥
सोमेश्वरालयं शैल पश्यायोध्यां महापुरीम्। सुधेश्वरालयं पश्य सरयूतीरसङ्गतम्॥
पश्चात्कोकामुखंपश्यगङ्गांपश्याब्धिसङ्गताम्। कामोदकमिदंपश्यपश्यकोङ्कणभूतलम्॥

१. उपदेशिता इति पाठः। २. आवटक्यमिति पाठः।

पश्चिमाम्भोधिकोणे च पश्य गोकर्णमुत्तमम् । रम्यं शेषाचलं पश्य स्कन्दो यत्र प्रति
श्रीमद्दक्षिणकैलासशिखरं पश्य भूधर । पश्य काञ्चीञ्च विपुलामेकाम्रशिखरं नग
पश्यारुणाद्रिशिखरं स्मरणात्पापनाशनम् । वृद्धाचलाद्रिं पश्याद्रे रम्यामभ्रसभां
पश्य नर्तनमीशस्य देवदेवस्य धूर्जटेः । गोपर्वतं तत्र पश्य पुण्यं मार्गसहायकम्॥
सह्याद्रिं पश्य तुङ्गाद्रे यतो जाता कवेरजा । पुण्यं श्रीकण्ठशिखरं ततो रत्नगिरीश्व
तृणज्योतीशशिखरं मातृभूताद्रिरेषवै । तद्दक्षिणे द्वादशान्तं ततो वेणुवनं नग ॥
महेन्द्रशिखरं पश्य दक्षिणाम्भोनिधौ स्थितम् । ताम्रपर्णी तत्र नदी कृतमाला च
कन्यातीर्थं ततः प्राच्यां पश्य चाद्रे शुचीश्वरम् । गन्धमादनशैलेशशिखरं पश्य भू
गजारण्यं ततोदीच्यां ततः पञ्चनदाह्वयम् । कुम्भेशशिखरं पश्य पश्य मध्यार्जुने
त्रिकोटीं मङ्गलं पश्य मायूरं श्वेतकाननम् । सङ्गतां सिन्धुना पश्य सह्यजां पुण्यनि
वाञ्छेश्वरं छायावनं पुण्यं तत्तेजिनीपुरम् । घटेश्वरं तत्र पश्य यत्र कालो हतः पुरा
श्रीमहेशेन पुण्याद्रे मृकण्डुतनयावने । ब्रह्मेशश्चैव वैद्येशं तञ्जेशं तत्प्रतीच्यके ॥ ४५
कमलालयसंज्ञश्च तथैवान्ये शिवालयाः । श्रुतिकाननमीक्षस्व वेदतीर्थस्तथाब्धिराट्
कावेरीतीरजोद्भासिलिङ्गधामानि लोकय । भारतं पश्य विपुलं खण्डं तल्लिङ्गमण्डल
प्राक्पश्चाद्दक्षिणे चापि भूधरेन्द्र तथोत्तरे । ब्रह्माण्डभित्तिरेषात्र खण्डान्यपि विलोक
शिवाज्ञया मया शैल दर्शितोऽयं नगोत्तमः । पुण्योऽयं रमणीयोऽयं कैलासश्शङ्करा
भद्राश्वं केतुमालञ्च प्राच्यामीक्षस्व सन्नग । पश्चाद्धरिश्च किम्पूरुषः खण्डे द्वे सागरा
देवभूमिरियं पश्य सुरकिन्नरहर्षदा । तत्रोत्तरे मन्दरो हि शम्भोरानन्दवासभूः ॥
इलावृतो मणीवर्षो भारतो दक्षिणे नग । कल्पितास्ते महेशेन वर्षाश्च कुलपर्वताः ॥
इत्येषतेसमासेनकथितोविस्तरः क्रमात् । श्रुत्वाध्यायमिमं पुण्यं कैलासे गणपो भवे

स्कन्दः—

तस्य तद्वचनं श्रुत्वा हृष्टरोमा महीधरः । प्रोवाच नन्दिनं वीक्ष्य जातहर्षो मुनीश्व

हिमवान्—

धन्यस्त्वं त्रिपुरारिपादकमलध्यानानुरागादरः
किं त्वत्तुल्यगुणं वदामि वचसा को वेद शम्भोर्गुणान् ।

चारित्रं विविधाण्डकोटिघटने पाण्डित्यमप्यन्ततो
वेदा वा विधयोऽपि वा हरिहरा जानन्ति नो वाप्यणु ॥ ५५ ॥
किं वक्तव्यमुमासहायचरणाम्भोजप्रभाभावत-
श्चानन्दाम्बुधिमग्नसर्वहृदयो जाने न किञ्चित्प्रिये ।
अत्रत्यामललिंगसौधकुलगं किं वा ममान्यत्प्रियं
शम्भोः पादपरागरञ्जितमनाः कालत्रयामीक्षणात् ॥ ५६ ॥
त्वं नन्दिन् गणपोत्तमोऽसि भगवन्क्षेमास्पदो मे सखा ॥ ५७ ॥

स्कन्दः—

इत्युक्त्वा हिमवाञ्छिलादतनयं चानन्दबाष्पाकुलो
मैनाकेन च मेनया शशिशिलागारस्थलिंगोत्तमम् ।
कृत्वार्चादिभरैरपारविभवैस्तुष्टाव शम्भुं तदा
शम्भो निश्चलमानसोऽप्यगकुलश्रेष्ठो हिमाद्रीश्वरः ॥ ५८ ॥
भक्त्याराधितवान् सुबिल्वविपिनोद्भूतैस्सुमैस्तत्फलै-
र्वर्षाणां दशकं महेश्वरदयासारप्रभावाधिकः ॥ ५९ ॥

हिमवान्—

शशिधर गरधर मारहराव्ययेश शम्भो गणनातीत गुणप्रकृष्ट देव ।
तव लिंगसुपूजनान्मनो मे न कदान्यत्रगतीषु भावयामि ॥ ६० ॥

स्कन्दः—

तस्मै चापि वरं ददौ पशुपतिर्भक्त्यैकनिष्ठाय ते
कामान्पूरयितास्मि वैभववते तद्वाञ्छतां मत्पुरः ।
इत्युक्तो गिरिराट् तदा हरगिरं श्रुत्वाह भक्त्या शिवम् ॥ ६१ ॥
देव्यास्ते भवने निवासमतुलं दूर्वासवाक्यं शिवे
भक्तिश्चापि भवाङ्घ्रिपङ्कजभरां संसारमुक्तिप्रदाम् ॥ ६२ ॥

---

१. अव्यय शम्भो गुणगणनातीत इति पाठः ।

नन्दिकेश्वरः—

धन्यः केदारलिंगोत्तममिलितशिराश्चाश्रयस्त्वं मुनीनां
त्वन्मौलौ वसतां तपःफलमहो दातुं प्रवृत्तो हरः ।
किञ्चाम्बाजनको ह्युदारचरितो वृद्धः कुलाधीश्वरः
कस्ते तुल्यनगो यतो नगवरे लिंगप्रतिष्ठार्चकः ॥ ६३ ॥

स्कन्दः—

विमानवर्येण नगेन्द्रमिष्टं तुष्टं प्रकृष्टं शिवपूजनेन ।
निगाय शम्भोस्सविधं गणेशो हृष्टो गिरिश्चेति ह्युवाच प्राञ्जलिः ॥ ६४

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे हिमालयस्य कैलासदर्शनन्नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

शिववाक्यन्नाम पञ्चविंशोऽध्यायः.

स्कन्दः—

ततो हिमाद्रिर्देवेशं कैलासामलसौधगम् । पार्वत्या सहितं शम्भुं दिव्यसिंहासनेस्थि
चतुर्भुजमुदाराङ्गं सर्वरत्नविभूषितम् । किरीटकोटिगोद्भासिचन्द्रार्धकृतशेखरम् ॥
कुण्डलायितकर्णोद्यत्कुण्डलीफणभूषितम् । नवरत्नाङ्गदलसत्कङ्कणाङ्गदमुद्रितम् ॥
सोमधामसमानास्यं तपनानललोचनम् । धृतत्रिपुण्ड्ररचनातदधस्तिलकोज्ज्वलम् ॥
उत्फुल्लरक्तकमलरत्नमालाधरं विभुम् । दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पार्चिताङ्घ्रि
धूपितं परितो धूपैस्तगरागरुसम्भवैः । शुद्धाम्बरधरं सौम्यं पश्यन्तमनिशं शिवा
मणिहर्म्यच्छविप्रोद्यद्दीप्तकैलासपर्वतम् । वामाङ्कसन्निविष्टाम्बावदनस्मितकान्ति
धावल्यतरनिर्यच्छ्रीदेवाङ्गप्रभया ततम् । नम्राननां महादेवीं शिवाङ्कस्थां महेश्वरी
भस्मत्रिपुण्ड्रनिटिलांकस्तूरीतिलकोज्ज्वलां । बिम्बाधरांप्रसन्नास्यांललन्नासाग्रमौक्ति

---

१. प्रकृष्टशिवलिंगसमर्चनेन इति पाठः ।

मुकुटोद्भासिचन्द्राङ्कां कचवद्धसुमल्लिकाम् । तपनोडुपविभ्राजिताटङ्कयुगलश्रवाम् ॥
मणिहीराच्छपदकलसद्ग्रीवामनोहराम् । कनकाङ्गदकेयूरनागवन्धविराजिताम्॥ ११॥
कस्तूरीरसपाटीरचन्द्रचन्दनचर्चिताम् । ताम्बूलपूरितमुखीं तिर्यग्लोचनकोटितः॥१२॥
पश्यन्ती वदनाम्भोजं शम्भोस्सुन्दरमेदुरम् । सुरम्यपादकमलं मुक्तामञ्जीरशोभितम्॥
देवीसखीभिश्च वृतं गणेन्द्रैश्च महेश्वरम् । मया च गणपेनापि धृतचामरवीजितम् ॥
छत्रैः पताकानिचयधारिभिर्गणपुङ्गवैः । जयन्तीविजयाहस्तधृतचामरवीजिता॥ १५॥
रम्यछत्रावृतमुखी दण्डिन्यादर्शहस्तया । वालया वीटिकामत्स्यपेटीविधृतया तदा ॥
मुद्रिण्या खड्गकोशोद्यत्करया सेविता शिवा । तण्डुहस्ते महाशूलं खड्गकोशश्च दण्डिना
भैरवोद्भावितमहानिषङ्गवरकार्मुकैः । कालाग्निरुद्रो मायूरव्यजनेनाप्यवीजयत्॥ १८॥
एवं गणवृतं देवं देव्या सिंहासनस्थितम् । दृष्ट्वा प्रणम्य नन्दीशो गिरिं देवाय जिज्ञिपत्
प्रवेश्यतामित्यशाच्चदेवदेवो महेश्वरः। प्राञ्जलिस्सत्वरंगत्वा ततोऽग्रे हिमभूधरम्॥२०॥
दृष्ट्वायान्तं स मैनाकं दत्तहस्तश्च नन्दिना । गौरीगुरुं महाशैलं जातहर्षं तदा नगम् ॥
प्रावेशयच्च सविधं शम्भोर्देव्या गणाग्रणीः । दृष्ट्वा देवं महादेवं स नगो हर्षनिर्भरः ॥
प्रणम्य प्राञ्जलिर्विप्रा मम मातामहोऽद्रिराट् । अगजापतिमाशास्यं तुष्टाव पुलकांगकः

हिमवान्—

भव हर भगवन्पुरान्तकारे प्रमथाधीश हरीन्द्ररुद्रपूज्य ।
विबुधाधिप सर्वमंगलाधिनाथ हर गरकन्धर सोमचन्द्रचूड ॥ २४ ॥
अहिवरवरहारशोभितांग ह्यगपतिवास महोरुलिंगवास ।
खगपतिवहनेत्रपूज्यपाद शम्भो विधिमस्ताभरण प्रसीद देवदेव ॥ २५ ॥
वलिवलमथनप्रमाथ शम्भो गिरिजानाथ सनाथयाशु माम् ।
मथनोद्भूतसमुद्रतोद्यद्गरहारिन्प्रमथैकनाथ पाहि ॥ २६ ॥
धृतगंगामलचन्द्रसत्कपर्द निगमोत्तंसविशेषवाक्यतुष्ट ।
भव भावहृदन्तरायनाश गिरिकैलासनिवास पाहि शम्भो ॥ २७ ॥
गजमुखषण्मुखसन्मुख शङ्कर चित्सुख कमलजमुखमौले ।
शशिमुखलोकन पञ्चमुखोद्यतलोचन लेखवरोत्तम पाहि ॥ २८ ॥

अव शिव सदयं भव भवहृदयं कुरुकुरु करुणां शशिमौले ।
वितर विमुक्तिं परिहर बन्धं स्मरहर यमहर भगहर शम्भो ॥ २९ ॥
भव पदकमले विदिश सुभक्तिं तव लिंगार्चनतः प्रकृष्टभावम् ।
तव पदकमलादरश्च शम्भो मम सन्मानसमेतदद्य चास्तु ॥ ३० ॥
तव लिंगामललोकनेऽस्तु नेत्रे तव पादप्रणतौ शिरोऽपि मेऽद्य ।
तव लिंगोत्तमपूजनाय हस्तौ तव लिंगालयप्रक्रमाय पादौ ॥ ३१ ॥
शशधरधर हर रथधरधरहर पुरहर शङ्कर गरधर शम्भो ।
जलधरवहनगधर शूलधराव्यय हरिभस्मारुणधर पाहि ॥ ३२ ॥

स्कन्दः—

तत्स्तुत्यातोषितश्शम्भुस्तमभ्यर्णे नगाधिपम्। एहीत्यवोचत्कृपया स्वागतेनाभ्यनन्द

ईश्वरः—

दृष्टः कैलासशैलो मे त्वया नगवरोत्तम । दृष्टानि शिवलिंगानि सर्वपापहराण्यग॥ ३
कोट्यर्बुदानि लिंगानि गोपुराण्यत्र सत्तम ।प्रासादवरसौधाश्च किं दृष्टा मण्टपावलिः
सरांसि रत्नकमलभ्राजिष्णवन्ति नगोत्तम। रत्नानां गिरयोऽप्यद्रे तन्मौलिमणिमण्ड
कैलासेश्वरलिंगं मे दृष्टं मुक्तिप्रदायकम् । अम्बिकेशं सदाम्बाया हृदयागारसंस्थितम्
गणानां भवनान्यत्र किं दृष्टानि त्वया नग। महावनानि पुष्पोद्यत्सुरभीणि समन्ततः
सहस्रलिंगधामोद्यत्कलशाली सुपुण्यदा । क्रीडारत्नमहासौधपंक्ती दृष्टा त्वया नग॥
रम्यं बिल्ववनं दृष्टं मणिलिंगोरुमूलकम् । पुण्याश्चात्र सभा दृष्टास्सेयं मे नर्तनस्य हि॥
सहस्रायुतलक्षोद्यत्कोटिस्तम्भोरुमण्टपाः । त्वया दृष्टा नगश्रेष्ठ सागरा मेरुपर्वतः ॥ ४
शैलप्राकारराजश्रीगोपुरालिविभूषावली । दृष्टं भुवनगोलं ते शिवक्षेत्राण्यपि क्रमात्॥ ४
धन्यस्त्वं नगमूर्धन्य धन्यः कैलासदर्शकः। कैलासदर्शनेनाद्य सफला ते जनुर्नग॥ ४
विष्णुब्रह्मादयो देवास्तथान्ये मुनयो गणाः । कैलासदर्शनार्थाय तप्यन्त्यद्यापि ते तपः
किं ममानुग्रहेणैव कैलासस्यास्य दर्शनम्। महादानैश्च विविधैष्षोडशैश्च नगोत्तम॥ ४
मम कैलासभवनदर्शनं नैव जायते। कोटियज्ञतपोभिश्च व्रतोपोषणकृच्छ्रकैः॥ ४६॥

१. कमलासनमिति पाठः।

मम कैलास........जायते। अष्टाङ्गयोगैर्विविधैर्यमादिनियमासनैः ॥ ४७ ॥
मम कैलास........जायते। गवां कोटिप्रदानेनाप्यश्वमातंगकोटिभिः ॥ ४८ ॥
मम कैलास........जायते। धनधान्यमणीनाश्च वस्त्राभरणदानतः ॥ ४९ ॥
मम कैलास........जायते। तीर्थप्रक्रमकन्यान्नदानैश्च गृहदानतः ॥ ५० ॥
मम कैलास........जायते। पानीयदीपकूपादिदानेनापि तपस्विषु ॥ ५१ ॥
मम कैलास........जायते। वेदवेदान्तवादैश्च वर्णाश्रमरतात्मनाम् ॥ ५२ ॥
मम कैलास........जायते। किन्तु प्रसादेन मम भक्त्या चैवाप्यनन्यया ॥ ५३ ॥
लभ्यते दर्शनं शैल मम कैलासमौलिगम्। अनन्यभावस्सततं भस्मपुण्ड्रोज्वलोऽनिशम् ॥
रुद्राक्षहारवलयः पञ्चाक्षरपरायणः। रुद्रलिंगार्चनपरो रुद्राध्यायजपादरः ॥ ५५ ॥
शिवक्षेत्रैकवसतिस्तेन लभ्योऽयमद्रिराट्। किमुक्तेनापि वहुना लभ्योऽयं मदनुग्रहात्॥
न देवा नैव गन्धर्वा ब्रह्मविष्णुमहेश्वराः। मनसा तैरचिन्त्योऽयं कैलासो मम भूधरः ॥

मद्भक्त्या जगति प्रचण्डसुरतासन्ताडने पण्डिता
भद्राद्यास्सिकताशनादितनयाश्चण्डांशुपुत्रापहाः।
चण्डीशः पितरं निनाय च यमं श्वेतोऽपि जिग्येऽन्तकम् ॥ ५८ ॥
मार्कण्डेयदधीचिगौतममुखा विष्णुं यमं चेन्द्रम-
प्याजौ ते जयशालिनो मम महालिंगार्चनादेव ते ॥ ५९ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे शिववाक्यन्नाम
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

शिववाक्यन्नाम षड्विंशोऽध्यायः

स्कन्दः—

नन्दीविज्ञापयामासश्रुत्वाशम्भोर्वचस्तदा। प्रणम्य विनयोपेतःप्राञ्जलिःकरुणानिधिम्

नन्दिकेशः—

धन्यो मान्योऽयमचलो दययेश तवामलः। ब्रह्मविष्ण्वादिभिर्देवैर्नैव ते गिरिरीक्षितः॥

---

१. पुत्रादयः इति पाठः।

न तपोभिरथ प्राप्यः कैलासो नगसत्तमः । त्वत्कृपासारवलनैर्नगो नेत्रातिथीकृतः ।
तव प्रमोदरसभृद्धरणीभृदयं शिव । दर्शनेनाद्य विवशः कैलासधरणीभृतः ॥ ४ ॥
तवापारमहाधाम्नि कैलासवरमौलिके । अनेन पर्वतेन्द्रेण विहितोऽत्र शिवालयः॥
शशिधामशिलाक्लृप्तः प्राकारवरगोपुरः । हिमाचलेश्वरं नाम लिङ्गं प्रातिष्ठिपन्नगः॥
पञ्चामृतनिषेकैश्च चन्दनैर्बिल्वपूजनैः । धूपदीपैश्च नैवेद्यैस्ताम्बूलछत्रचामरैः ॥ ७ ॥
वाद्यसङ्गारवैश्चैव मेनया पूजयन्नगः । मैनाकेन च लिङ्गं ते स्वमौलिशशिधामजम्॥
तेन स्तुतं महादेव तत्स्तुतिं शृणु शङ्कर ॥ ९ ॥

नन्दी—

उमासहाय उरुकाय भवादिभाव पापाद्विहाय गुणरूपविहीनकाय ।
दग्धान्धकत्रिपुरमन्मथकाय शम्भो मायामयादिजनतासु च मोचयाव॥

स्कन्दः—

नन्दीशतस्स्तुतिं श्रुत्वा सन्तुष्टो नितरां हरः । तमभ्युवाच हृष्टात्मा स्वलिङ्गार्चनतः
लिङ्गप्रतिष्ठया तुष्टश्चाष्टमूर्तिरुवाचतम् ॥ ११ ॥

ईश्वरः—

धन्यस्त्वं मम कैलासे मल्लिङ्गालयकल्पकः । प्रतिष्ठितं महालिङ्गं तेन सर्वमनुष्ठितम्
तेनयागाःकृतास्सम्यग्दक्षिणान्नादिभिस्सदा । तपांसितेनतप्तानिकृच्छ्रचान्द्रायणादि
त्रैलोक्यं तेन भूपृष्ठे भूधरेश प्रतिष्ठितम् । वने पुरे वा ग्रामे वा पर्वते वा सरित्तटे ॥
गङ्गातीरे कोटिगुणं ततः कोटिगुणं नग । किं पुनर्मम कैलासे विष्णुब्रह्मादिदुर्ल
धन्यस्त्वं मम हृत्पद्मसद्मगोऽसि नगोत्तम । तवादेयं किमस्त्यत्र त्वमेवाहं न संशयः
त्वमेवाचरमूर्तिर्मे यतो लिङ्गवराश्रयः । केदारेश्वरलिङ्गन्ते यतस्त्वन्मौलिसंस्थित
तल्लिङ्गदर्शनादेव मुक्तिसाम्राज्यमस्तु ते । देवैश्च मुनिभिश्चैव गणेन्द्रैरपि भूधर॥
तव मौलौ तपस्तप्तं केदारेश्वरपूजकैः । तपस्स्थानं महोत्कृष्टं तव मौलिर्नगोत्तम॥
धन्यस्त्वं सर्वमान्योऽसि त्वत्तो जातेयमम्बिका । ममैषा परमा मूर्तिरियं शक्तिस्सदा
यस्याः कटाक्षलेशेन जगदेतच्चराचरम् । यस्याः पदाम्बुजद्वन्द्वदर्शनेन सुरासुराः॥
निर्वृताःपरमां मुक्तिं लभन्ते मत्प्रसादतः । मा विचारय शैलेन्द्र वरं मत्तोऽभिकाङ्क्ष

प्रसन्नोऽस्मि नगश्रेष्ठ मम लिङ्गप्रतिष्ठया । कैलासमौलौ शैलेन्द्र मुक्तोऽसि मम पूजया

स्कन्दः—

हिमवान् शङ्कराच्छ्रुत्वा वचनं चातिहर्षितः। मौलौ कराञ्जलिं कृत्वा प्रणम्य परमेश्वरम्
प्राहानन्दाश्रुधारोद्यत्पुलकाङ्गो महीधरः ॥ २९ ॥

हिमवान्—

किमन्येन वरेणेश यतो दृष्टं पदाम्बुजम् । तवाद्य देवदेवस्य धन्योऽस्मि नगसङ्घके ॥
तपसा मे न शक्यं ते कैलासस्यास्य दर्शनम्। लिङ्गसौधाश्च विविधा मौलिकुम्भपताककाः
दृष्टाह्यनेकास्सुदृशाकैलासेशोऽपिवीक्षितः । अम्बिकेशोमयादृष्टोदेवीशोऽपिस्तुतोमया॥
स्कन्देशश्च गणेशश्च मयैक्षि कुमुदेश्वरः। सभाश्चापि मया दृष्टा गोपुराण्यपि ते विभो ॥
प्राकाराः परिघाकारास्सागराश्च तथाद्रयः। मण्टपावलिसङ्घाश्च मम नेत्रातिथीकृताः ॥
किं मुक्त्या मम देवेश देव्या दर्शनतो मम। तव पादाम्बुजद्वन्द्वे भक्तिरस्तु ममाचला॥
अचलस्यापि मे देवह्यचलं मे मनस्त्वयि। देव्याः प्रसादतो मेना पश्यन्ती तव हृन्नगम्
विस्मयानन्दहृदया मैनाकोऽप्ययमीश्वर । देव्याश्चिरं सहावासात्तव कैलासपर्वते॥३३
देवीपदाम्बुजद्वन्द्वं किञ्चित्कालं मयि प्रभो । मौलौ मे दधतामद्य मम देवीप्रसादतः ॥
त्वत्प्रसादात्सनाथं मां कुर्वन्ती परमेश्वरी। केदारेशं महालिङ्गं मम मौलिस्थितं शिव॥
समर्चयतु देवीयं किञ्चित्कालं सहोषिता। मेनया रमतामीशा लोकयात्रेयमीदृशी॥ ३६
दूर्वासापि महायोगी तपस्तप्स्यति दारुणम्। मुनिभिश्शैववर्यैश्च भस्मरुद्राक्षभूषणः॥ ३७
भस्मशायी रुद्रजापी केदारेशार्चने रतः। त्रिकालं बिल्वपत्रैश्च तव भक्त्याप्यनन्यधीः ॥
अनुग्रहीष्व तमनु मम मौलिकृतास्पदम् ॥

स्कन्दः—

इत्युक्तं गिरिशेनेदं गिरीशो भक्तवत्सलः। प्राह देवीं महादेवो वीक्ष्य तं हिमभूधरम् ॥

श्रीशिवः—

एष प्रार्थयते शैलस्तवागमनमुत्तमम्। स्वमौलिधामलिङ्गञ्च केदारेशञ्च वीक्षितुम् ॥

१. दृष्ट्वाधन्येनेति पाठः । २. अनुगृह्णीष्वेति पाठः ।

मदाज्ञयैव दूर्वासास्तपस्तप्यति तत्र हि । धन्यं कुरु नगश्रेष्ठं मेनां मैनाकमीश्वरि ॥ ४
गच्छ लग्ने शुभे देवि विमानेनार्करोचिषा । गणेशैश्च नगेशैश्च सेवितन्नगसद्म तत् ॥
दूर्वाससं मुनिवरमनुगृह्यार्चयेश्वरम् । केदारेशं तव पितुर्वरमौलिसमाश्रयम् ॥ ४३
विगाह्य तत्र गङ्गाञ्च त्वत्पितुर्मौलिगां सुखम् । विहरस्वाद्य देवेशि मेनया पूजिता हि
एकांशेन वसात्रैव मम पार्श्वे सनातनि । विचित्रशक्ते देवेशि त्वत्पितुर्हर्षदायिनी ॥
कञ्चित्कालं विहृत्येशि पुनरागच्छ सत्तमे ॥ ४६ ॥

स्कन्दः—

इत्युक्तं श्रीमहेशेन प्राहभूधरकन्यका ॥

देवी—

मनोरथोऽयमतुलो मम मेनासुहर्षदः । पश्यामि शिखरं देव पितुर्मम सुरेश्वर ॥ ४७
केदारलिङ्गपूजाञ्च कुर्वेऽहं भक्तिभाविता । दूर्वासास्तव भक्तोऽयं किमर्थं तप्तवांस्तपः
तदाचक्ष्व महादेव श्रवणे कौतुकं मम । दयया भगवन्ब्रूहि मम तत्तपसो विधिम् ॥

स्कन्दः—

इत्यम्बावचनेन सुन्दरगिरा प्रोवाच विश्वेश्वरो
देवीं वीक्ष्य मुदा तदा गिरिवरं दृष्ट्वा गणेन्द्रानपि ।
माञ्चैवाथ गजाननं प्रकटया दूर्वाससस्तत्तप-
स्स्वस्याज्ञाकरणेन विश्वविनतो देवीं बभाषे प्रभुः ॥ ५० ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे शिववाक्यन्नाम
षड्विंशोऽध्यायः ॥ २६ ॥

## दूर्वासस्तपश्चर्यावर्णनं नाम सप्तविंशोऽध्यायः

ईश्वरः—

कथमाकर्णयापर्णे दूर्वासात्र पुरा मुनिः । तेन तप्तं तपो घोरं वर्षाणामयुतं शिवे ॥
वर्षमेकं निराहारो वर्षमात्रावकाशकः । वर्षं स जलमध्यस्थो जपन्रुद्रमनन्यधीः ॥
पर्णाशी वर्षमेकं तु वर्षं गन्धवहाशनः । वर्षं धूमाशनो देवि पञ्चाग्निपरिमध्यगः ॥

सदाचानिमिषस्सूर्यमण्डलस्थं विलोक्य माम्।एकहस्तेन गां बिभ्रन्नूर्ध्वपादस्थितोमुनिः
पञ्चाक्षरपरो देवि पञ्चास्यध्यानतत्परः। जटालम्बिशिरोऽत्यर्थं न्यग्रोध इव वर्षके।।८
पादावाबध्य वृक्षाग्रे मुनिर्लम्बदधश्शिराः। वर्षमेकं महादेवि भस्मच्छन्नस्त्रिपुण्ड्रधृक् ।।
सुरवित्रासनकरं विष्णुब्रह्मादिभिस्सुरैः। मुनिभिर्गणपैश्चैव तदशक्यं तपोऽम्बिके ।।७
दूर्वाससा यथा तप्तं तथा केनापि नोऽम्बिके। एवं सन्तप्यमानोऽयं सदा मल्लिङ्गपूजकः।।
सर्वावस्थास्वपि मुनिर्बिल्वपुष्पैर्विराजितैः। तस्यासन्बहवश्शिष्या मुनयो वीतरागिणः
भस्मत्रिपुण्ड्ररुद्राक्षधारिणश्चर्मवाससः। सर्वे लिङ्गार्चनपरा गुरुशुश्रूषणे रताः ।। १० ।।
तं शुश्रूषन्ति नियतास्सदा दूर्वाससं मुनिम्। तत्कालोचितसेवाभिर्नियमात्तोषयन्ति तम्
एवं तपस्यतस्तस्य शतशृङ्गे महीधरे। नानाद्रुमलताकीर्णे नानापक्षिमृगावृते ।। १२ ।।
तपस्विशरणे तस्मिन्नरम्यापारशिवालये। तत्राहमगमं देवि तत्प्रसादाय केवलम्।।१३।।
आरुह्य मे तं वृषभं गणसङ्घनिषेवितः। तं दृष्ट्वा विस्मयोपेतस्तत्र तं मुनिपुङ्गवम् ।।१४
वृतं सहस्रशिष्यैश्च स्वसमानैर्महेश्वरि। अवोचं परया प्रीत्या तदा दूर्वाससं मुनिम् ।।
दूर्वासास्त्वं तपोराशिर्वाराशिरिव धैर्यधृक्। अकम्प्यो भूमिभृत्तुल्यो यशोधनतपोधनः
सदा वाताशिपर्णाशी सलिलाश्यनिलाशकः। तव द्रष्टुं तपो घोरमागतोऽस्मि वरं वृणु।।
तावन्निमीलिताक्षस्स विषमाक्षमवैक्षि च। त्र्यक्षसन्दर्शनानन्दसञ्जातपुलको मुनिः ।।
अथालुलोके स्वदृशा सदृशं भास्कराधिकम्। वृषस्थं गणपैर्युक्तं मां तुष्टावाष्टपद्यकैः।।१९
वेदान्तसारसर्वस्वैस्तत्स्तुतिं शृणु शैलजे ।।

स्कन्दः—

इलामिलन्मौलिरथेन्दुमौलिं मायानिशानिद्रितजीवितेन्द्रम्।
विद्राविचिन्मुद्रकराग्रमुद्रम् ।। २० ।।
व्यालेन्द्रमालं गरनीलकण्ठमाफालकालं मुनिरालुलोके ।। २१ ।।

दूर्वासाः—

स्वधामा क्षिप्रेषुर्मृग इव सुभीमो दहरग-
स्त्वधूमो ज्योतिस्त्वं महिमगत आद्यश्च भगवन्।

अषाढं त्वामुग्रं स्थिरकरणकायेन वचसा

नुमस्स्तूमोढ्ढेमस्तनुगतमथैनोनिवपन ॥ २२ ॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।

मा नोऽवधीस्तनयं तं सुतं मे गावश्चाश्वान्हविषा त्वां यजामः ॥ २३ ॥

शम्भोऽस्मदीयविविधेषु दुरावरेषु पापेषु निष्कृतिमतोऽप्यविनाशकेषु ।

एकद्विधात्रिचतुरेष्वपि पञ्चकेषु त्वं शूरभूरिषुवधिः करुणार्द्रदृष्ट्या ॥२४॥

अन्तर्ये न भजन्ति मूढमतयो ध्यानं मनीषाततं

रुद्रं त्र्यम्बकमम्बिकाविलसितं श्रीकण्ठमीशं सदा ।

लिङ्गे कोमलविल्वपल्लवजलैर्नार्चन्ति ये जिह्वया

त्वद्भुक्तामलशेषभुक्तिरहिता गृह्णन्ति ते वै मलम् ॥ २५ ॥

देवं लिङ्गवरे सदा स्थितमहो बिल्वीदलैः कोमलै-

र्नीरैर्वापि मघक्रियासु भगवन् सोमस्य वा गेह्वया ।

भूर्णित्वा सवनेषु क्रोधितवपुर्भीमं मृगेन्द्रोपमं

याचे देव सदा गिरा मधुरया मा चुक्रुधश्शङ्कर ॥ २६ ॥

कस्त्वां दैवतसार्वभौमरहितं याचेऽद्य चेशानक-

माभिस्त्वां भगवन् सदैव च नमोगीर्भिश्च रुद्रोद्यतैः ।

नक्तश्चापि दिवा महेश पितरं हृद्रं बृहन्तं मृधं

मृष्टन्त्वामजरं सुषुम्णमपि वै रुद्राण्यया संयुतम् ॥ २७ ॥

राजचन्द्रकलाधरश्च भुवनस्येशानमिन्दुप्रभं

त्वद्भक्ताः कवयो हवेम सततं त्वल्लिङ्गपूजादराः ।

त्वं शम्भुः प्रमतिः पितासि हितकृद्बन्धुस्त्वमेवासि मे

त्वं माता परमो वयस्कृदपि मे त्वज्जामयो वा वयम् ॥ २८ ॥

त्वां देवञ्च भजाम शङ्कर विभो त्वद्भक्तिधारारसैः ॥ २९ ॥

दूर्वासाष्टकमेतदेव कलितं चित्ते कुतो दूर्वसः

क्रोधो नाम भविष्यतीशभजनात्तं वै श्रियो वाञ्छिताः ।

१. गह्वयेति पाठः ।

उच्चचामरछत्रपंक्तिविलसन्मत्तेभकुम्भस्थिता
राजद्वन्दिगणस्तुतो मधुरया वाचा सदास्ते सुखी ॥ ३० ॥

ईश्वरः—

तुष्टस्तत्परयाभक्त्या तं ब्रुवन्तं मुनिं शिवे। कामान्वृणु तपोराशे सर्वालभ्यान्यथेप्सितः॥
इतिमद्वचनं श्रुत्वा स दूर्वासा महातपाः। प्रोवाच नित्यतां तस्य मत्कैलासागमस्तदा॥
सर्वलोकेषु नियतं वासस्सर्वत्र पूजनम्। अमोघक्रोधहर्षाप्तिश्शापान्नैव तपः क्षयः॥३३॥
इत्थं ययाचे स मुनिस्तत्सर्वं दत्तवानहम्। [1]कं दत्वास्य वमन्कामांस्तेन सम्पूजितस्तदा
तस्मादपक्रमञ्छैलाच्छतशृङ्गात्तदा क्षणात्। कैलासभूधरं प्राप्तश्शाङ्करेणामुना शिवे॥
गायता शङ्करं सोमनन्दिना विश्वनन्दिना। गणेन रैवतेनाथ साम रैवत गायिना॥
सन्तुष्टोऽतिप्रसन्नास्यः कैलासेश्वरपूजकः। निशामुखे प्रदोषे मे प्रदोषे तत्र शङ्करि॥
संपूज्य देवं कैलासादभिन्नं लिङ्गमेववा। पूजान्ते स मुनिर्दृष्टो दूर्वासायं सशिष्यकः॥
कैलासलिङ्गं नत्वा मां प्रतिष्ठाप्यात्र लिङ्गकम्। स्वनाम्ना मम कैलासेदूर्वासेश्वरनामकम्
लिङ्गं तद्विकटेशानात्पश्चिमेदिव्यधामगम्। नित्यंत्रिकालमभ्यर्च्यमांवीक्ष्यायातिगच्छति
तत्र तत्र सदा देवि तस्मिन्कैलासपर्वते। तस्मै प्रीत्या मया दत्ता विल्वपुष्करसंयुता॥
कैलासलिङ्गमौलीतः प्रीत्या तस्य मुनेः करे। तां गृहीत्वामुनिर्मालांनेत्रेशिरसिचार्पयत्
प्रसादश्च मया दत्तं निर्माल्यं निर्मलाय हि। शाङ्कराय मया दत्तस्त्वन्येषां देविदुर्लभः
मत्तः प्रसादं संप्राप्य निर्गतो मम भूधरात्। अटता तेन विप्रेण दृष्टो मार्गे महेश्वरि॥४४
दैवैः परिवृतश्चेन्द्रः कुलिशोद्यत्करो युवा। शच्याप्यनुगतश्शक्रश्छत्रचामरशोभितः॥
नृत्यद्भिरप्सरस्सङ्घैः परितो यायिदैवतैः। शारदाभ्रघनप्रख्यं गजमभ्रमुवल्लभम्॥४६
चतुर्दन्तं महाकायमारुह्य पुरतो मुनेः। ययौ देवेश्वरस्तत्र तस्मै मालामदात्तदा॥४७॥
सोऽप्यखर्वमहागर्वदुर्वाराम्बुधिमध्यगः। अगणय्य मुनिं ताश्चमालाम्मेऽप्रसादिताम्
अङ्कुशाग्रेण जग्राह मत्तवारणकुम्भगः। दूर्वासदत्तां तां मालां पातयामास हेलया॥
कुम्भे कुम्भीपतेस्तस्य ययौ मन्दं शतक्रतुः। मदान्धितस्स करटिश्शुण्डाग्रेणाग्रहीत्तदा॥
स्वकण्ठे ताडयामास कुम्भाग्रे कर्णयोस्तदा। तं तादृशं स दृष्ट्वैव करण्टं करटिस्थितम्॥

१. तन्दत्वा सर्वकामान्वै इति पाठः।

चुक्रोध क्रोधभारेणाप्यशपत्तं मुनिस्तदा। शतमन्युं मन्युना स महामन्युप्रसादभाक्॥
दूर्वासाः—
क्रोधी गर्वोऽमराधीश देवीशम्भुप्रसादिताम्। मालां मौलौ गजस्याद्य पातयस्यति
विनष्टभ्रष्टराज्याङ्गो निश्श्रीकस्त्वं भविष्यसि। अयमैरावतः क्षिप्रं दानवैश्च प्रपीडि
त्त्वया दुःखं महातीव्रं प्राप्तव्यं सुरसत्तम। तवानुयायिनो देवा गुरुस्त्वद्बोधदायकः॥
मन्दोऽनुयातस्सगणो दुःखं प्राप्नोतु शाश्वतम् ॥
ईश्वरः—
इत्युक्तं तद्वचश्श्रुत्वा सगुरुस्स शतक्रतुः। अवरुह्य गजात्क्षिप्रं नत्वा च मुनिपादयोः
शच्या च गुरुणा देवैस्स दूर्वासाः प्रसादितः ॥ ५७ ॥
इन्द्रः—
क्षमापराधं मेऽद्याशु विमोक्षं वदसत्तम। तवापराद्धं केनैतत्तद्धार्यम्मुनिसत्तम ॥ ५८
शिवदत्तमहामालालङ्घनेनाद्य दुर्मतिः। मदान्धेन मयाकारि चेष्टितं तव कोपकृत्॥
ईश्वरः—
इत्युक्तो बहुधा तेन स दूर्वासा महाप्रभः ॥ ६० ॥
दूर्वासाः—
उवाच तं गुरुश्चापि मा ते बुद्धिस्सदामरः। शिवमायागृहीतस्य देवराज्येन दुर्मते।
मामप्रणम्य चाग्राहीन्मम वाङ्मनृता भवेत्। वस त्वममरैर्युक्तस्तपसाभ्यर्चयन्हरम्।
अयुतं देवशरदां हिमाद्रौ देवनायक। ततःप्राप्स्यसि राज्यं तेऽप्यसुरैर्हृतमोजसा॥६
ईश्वरः—
इत्युक्त्वा निर्गतो देवि दूर्वासाःक्रोधमूर्छितः। इन्द्रो हिमाद्रिं सम्प्राप्य हृतराज्योसुदै
बलिनापालितं देवि विष्टपं तुष्टतस्ततः। ततापं देवैर्गुरुणा शच्या त्रिदशनायकः॥६
त्रपाकष्टभराक्रान्तः केदारेश्वरमर्चयन्। केदारमस्तुवद्भक्त्या पुनः प्राप्तामरावती॥६
दूर्वासोऽपि महायोगी शाम्भवः कल्मषैर्युतः। पुनस्तताप शरदां शतमानेन पार्वति॥६

१, प्राप्नोति सुरद्रुजः इति पाठः।
२. तवापराधः केनैव धार्यते मुनिसत्तम इति पाठः।

अशैवाय मया दत्तं निर्माल्यं शङ्करस्य हि। इति तद्दोषशान्त्यर्थं तप्यते परमं तपः ॥६८
हिमाद्रिमौलौ देवेशि स दूर्वासा महामुनिः। तवसन्दर्शनादेव निरागस्सम्भविष्यति॥६९
यस्तेमदीयं कैलासमागतस्स महामुनिः। तस्मान्मदीयं निर्माल्यं निर्मलेनैव चेतसा ॥
निर्मलैश्शाम्भवैरेव ग्राह्यमन्यैर्नचाम्बिके। मद्दत्तं चन्दनं पुष्पमन्नं भक्ष्यं फलादिकम् ॥
मद्भक्तैरेव तद्ग्राह्यं देयं तेषां न चान्यतः। मर्यादा च कृता देवि मन्निर्माल्यस्य भक्षणे ॥
धारणे शाम्भवा एव पात्रन्निर्माल्यदर्शने। अशाम्भवे यथा दत्वा परितप्तो महामुनिः ॥
मम प्रियोऽपि दूर्वासास्तथान्यस्सत्यमुच्यते। तस्मान्निर्माल्यमीशानिशाम्भवायैवदापयेत्
तमनुग्राह्य देवेशि त्वत्पितुश्शिखरे स्थितम्। याहि तत्र विमानेन चैकांशेनात्र संवस॥७५

स्कन्दः—

इत्याज्ञां विपुलां प्रगृह्य नगजा दूर्वाससस्तां कथां
श्रुत्वामोदितदन्तुराश्रुपुलका पित्रा गणेन्द्रैरपि।
स्कन्देनापि मया तथा गजवरास्येनापि सन्तोषतो
यानायाशु तदा तथा गणवरैर्देवी सखीनां गणैः ॥ ७६ ॥
उद्युक्ताभवदीश्वरेश्वररता देवी मुदा स्वांशतः
कृत्वा चान्यवपुस्तदा नगवरे देवाङ्कसंस्था शिवा ॥ ७७ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे दूर्वासस्तपश्चर्यावर्णनं नाम
सप्तविंशोऽध्यायः ॥ २७ ॥

---

## हिमाचलस्य देव्यागमनन्नाम अष्टाविंशोऽध्यायः

जैगीषव्यः—

कथं कैलाससदनान्निर्गता जगदम्बिका। दूर्वाससा स्तुता देवी कथं देवानुमोदिता ॥१॥
कियन्तं कालमवसत्कथं देवी परा शिवा। कथं सा पूजिता देवी हिमशैलेन मेनया ॥२॥
केदारेश्वरपूजापि कथं देव्या सुराङ्गनाः। अश्रौषं सङ्गताश्चेति तारकारे वदाद्य तत् ॥ ३ ॥
पुरारिप्रेमसदन नगपौत्र नगान्तक ॥

सूतः—

इत्थं पृष्टस्समुनिना स्कन्दोवाच मुनीन् गणान्। देव्या हिमाद्रिगमनं शृणुध्वंतेनकीर्ति

स्कन्दः—

जैगीषव्य जितक्रोध कामाराति पदार्चक। अनाख्येयं त्वयि मुनौ नास्तिकिञ्चिन्ममा

ततो वहुतिथे काले याते सपरमेश्वरः। देव्या विहारशयनैर्भोगजालैरनेकशः॥ ६॥

देव्या संप्रार्थितो देवो हिमाद्रिगमनं प्रति॥ ७॥

देवी—

नगराजोऽयमधुना मेनया सह शङ्कर। मां प्रार्थयति केदारं द्रष्टुं लिङ्गन्तव प्रभो॥ ८॥

दूर्वासापि महायोगी तव भक्तो जितेन्द्रियः। तपसा कर्शिततनुस्तव पादाब्जपूजकः॥

अनुगृह्य मुनिं लिङ्गं केदारं पूज्य भाविता। मेनया भूधरेणाद्य पूजिता तन्नगोत्तमे॥

विपिनावनिमीशानं गङ्गां तत्राब्जिनीमपि। विगाह्य सखिभिस्स्वैरं दृष्ट्वातन्मौलिभासु

कैलासमागमिष्यामि यद्याज्ञा तव शङ्कर॥

स्कन्दः—

इत्यम्बावचनं श्रुत्वा प्राह देवोऽद्रिजासखः। किञ्चिन्म्लानमुखाम्भोजो देवीमाह महेश्व

ईश्वरः—

श्वः प्रभाते महादेवि गच्छ त्वं नगमौलि तत्। विहराद्य मया सार्धं कैलासमणिसद्मनि॥

सृजस्व शक्तिं देवेशि तव देहान्ममाङ्कगाम्॥ १४॥

स्कन्दः—

इत्युक्ता देवदेवेन सा देवी गिरिजा तदा। मनसोन्मन्यशक्तिं तां निर्माय परमेश्वरी॥

राजद्धम्मिल्लपुष्पाढ्यामुद्यदिन्दुसमाननाम्। नीलोत्पलदलप्रख्यनयनद्वयशोभिता

बिम्बाधरां गन्धफलीनासालम्बितमौक्तिकाम्। रत्नग्रैवेयमालाढ्यां फुल्लहल्लकधारि

कनद्रत्नाच्छताटङ्कां चन्द्रार्धमुकुटोज्ज्वलाम्। तिलकाङ्कितसत्फालामलकाक्तपदद्वया

रत्नाङ्गदभुजां देवीं रत्नकाञ्चीलसत्कटिम्। रत्नाङ्गुलीयविलसत्करशाख्यग्रपल्लवाम्॥

पादाम्बुजरणद्रत्नशृङ्खलांनूपुरान्विताम्। दिव्याम्बरावृतां तत्र दिव्यचन्दनचर्चिता

रक्तकुङ्कुमवर्णां तां ताम्बूलास्यां सुमध्यमाम्। मनोन्मनीं सा ससृजे मनसा सा महेश्व

मनोन्मन्या तया देवी तस्मिन् कैलासपर्वते । मनोन्मनीश्वरं लिङ्गं दिव्यप्रासदमध्यगम् ॥
प्रतिष्ठाप्यार्चयामास पञ्चामृतनिषेचनैः । गन्धैर्दूपैश्च वासोभिर्दीपैर्बिल्वैश्च पङ्कजैः ॥२३
नैवेद्यैश्चापि ताम्बूलैर्मणिनीराजनोत्सवैः । सापि तुष्टाव तल्लिङ्गं देव्या चिच्छक्तिरीश्वरी

मनोन्मन्युवाच—

वाचामगोचर मनसोऽपि मनोन्मनीश देवेश द्योतक मनोज्ञगणस्य काश ।
त्वं व्योमकेश दयया शशिधाममौले पाहीन्द्रियादिरहित प्रणवप्रकाश ॥२५॥
बालार्धगात्र रमणीयजटोरुगङ्गातुङ्गोत्तमाङ्ग शशिधामललाम शम्भो ।
विश्वेश विश्व मदनान्तकर प्रसीद कैलासवासि निगमागमतत्वसार ॥ २६ ॥

स्कन्दः—

एवं संस्तुत्य तल्लिङ्गं तया देव्या शिवा तदा । पूजया देवदेवस्य तां प्रीतामकरोच्छिवा ॥
तामानिनाय देवस्य सन्निधिं परमेश्वरी । प्रणामं शम्भुपादाब्जे तया देव्या तदाकरोत् ॥
तद्दर्शनसुधासारस्मेरास्यं प्राह शङ्करम् ॥ २९ ॥

देवी—

मयैवोत्पादिता शक्तिस्तव वामाङ्कसंस्थिता । मनोन्मनीयमतुलाप्यनया विहरेश्वर ॥ ३०
यत्र कुत्रापि त्वत्क्षेत्रे भूलोके वामरालये । तव लिङ्गसमीपस्था त्वत्प्रीत्यै भवतां भव ॥ ३१
अस्मिन्कैलाससदने ह्यनया स्थापितं शिव । मनोन्मनीश्वरं लिङ्गं तस्मिन् सन्निहितो भव
यावदागमनं मेऽद्य तव पादाम्बुजादरा । विहाराहारशयने त्वयैषाद्यानुगृह्यताम् ॥ ३३ ॥
तव मोदाय देवेश मनसेयं विनिर्मिता ॥

स्कन्दः—

इत्यम्बावचनानन्दसन्दोहपुलकाङ्कः । दृष्ट्वा मनोन्मनीं शक्तिं तल्लिङ्गं स्थापितं तया ॥
प्रहर्षजातसौहार्दो तां गाढं परिषस्वजे । देवीं स्वाङ्के सन्निवेश्य तया स बुभुजेश्वरः ॥ ३५ ॥
रत्नपात्रेषु सङ्कुसमन्नजातं चतुर्विधम् । दिव्याभरणवासोभिर्धूपैर्दीपैस्तथाम्बिकाम् ॥ ३६
सुस्नातां समलङ्कृत्य प्राह नन्दिनमीश्वरः ॥

ईश्वरः—

देव्यानया गणेन्द्रैश्च नगेन्द्रेण सहामुना । मेनया गणपेन त्वं स्कन्देन च सखीगणैः ॥ ३७

विमानेनार्कवर्णेन मणिसिंह्मोपशोभिना। गच्छ त्वं द्रुत एवाद्य शिवया हिमभूधरम्॥
देव्या यथोचितां पूजां तत्र तत्र प्रकल्पय। नग्लानिर्नश्रमो वास्यास्सूर्यचन्द्रकरैस्तथा।
भक्ष्यैर्भोज्यैश्च विविधैर्गन्धपुष्पैर्मनोहरैः। हिमाचलं स मैनाकं मेनामेनां गणोत्तम॥
गणेश्वरान्सखीजालं स्कन्दविघ्नेश्वरौसुतौ। सम्पूजयय यथाजोषं पथिश्रान्तिविवर्जितम्।
परिष्कृतं रत्नजालैर्विमानं कल्पयादरात्। देव्या हिमाद्रिगमने शीघ्रं त्वं सन्निधीयताम्॥

स्कन्दः—

इत्याज्ञां शिरसा शम्भोः प्रगृह्य स शिलादजः। नानाकक्ष्यान्वितं रम्यं पर्यन्तवरवेदिकम्।
मुक्तावितानविततं रत्नद्वारशतावृतम्। मणिहंसमहासिंह्मं पिकसङ्घविनादितम्॥
क्रीडामयूररचितं पताकार्बुदशोभितम्। मणिजालाङ्कितं दिव्यमुद्यत्कलशभासुरम्।
घण्टानादितदिक्चक्रं पुष्पदामोपशोभितम्। रणद्वेणुमहावीणाशङ्खदुन्दुभिघोषितम्।
रुद्रावतारक्रीडादिरचितं चारुशिल्पकैः। भक्ष्यभोज्यान्नपानैश्च सुगन्धामोदमोदितम्।
धूपितं वरधूपैश्च नानामणिगणान्वितम्। दिव्यसिंह्मासनोपेतं पताकाछत्रचामरैः॥
शोभितं रत्नमञ्चैश्च शय्यागृहविभूषितम्। सुरम्यमुकुरोद्दामतल्पंक्तिविराजितम्॥
सोपधानकुथोपेतं कक्ष्याशतविचित्रितम्। कैलासशिखराकारं विमानं सार्वगामिकम्।
रुद्राणीगीतमाधुर्यवीणादिध्वनिशोभितम्। तद्देवाय तदा नन्दी विमानं दर्शयत्क्षणात्।
देवो दृष्ट्वा गणैर्नीतमद्रिजामाह शङ्करः ॥ ५२ ॥

ईश्वरः—

सिद्धं विमानं देवेशि तव गन्तुमुपस्थितम्। दिव्यो मुहूर्तसमयस्समारोह द्रुतं शिवे॥
मैनाकेन गिरीशेन मेनया स्वसखीजनैः। तवानुयात्रास्सर्वेऽद्य स्कन्दहेरम्बकासुताः।
नन्दीश्वरो वीरभद्रस्तण्डुभृङ्गीरिटिस्तथा। सेवां कुर्वन्ति देवेशि त्वदीयाज्ञावशास्सदा।
विश्रम्य पथि देवेशि गच्छानन्दरसैर्युता ॥

स्कन्दः—

इत्युक्ता सा शिवादेशं प्रहृष्टहृदया तदा। स्तुत्वा नत्वा महादेवं सा गाढं परिषस्वजे।
किञ्चिदानन्दजाश्रूणिमुञ्चन्तीसाशिवाननम्। वीक्ष्यत्रिलोचनानंदजाश्रूणिपरिमार्ज्य
वासाञ्चलेन तामाह संस्थिताञ्च मनोन्मनीम् ॥ ५८ ॥

देवी—

शिवाज्ञाकारिणी भद्रे शयनासनचेष्टितैः । कामाङ्गनाशनापारचित्तरागानुवर्तिनी ॥५९

विहरस्व यथाजोषं यावदागमनं मम ॥ ६० ॥

स्कन्दः—

इत्याज्ञाप्यतदादेवीपुरस्संस्थांमनोन्मनीम्। साप्रणम्यशिवापादौतयामूर्ध्न्युपजिघ्रिता॥
शिवेनानुगता देवी कंश्चित्कक्ष्याम्बिका तदा । प्रतस्थे सा तदा देवी सखीगणनिषेविता
छत्रैः पताकैर्व्यजनैश्चामराणाञ्च पंक्तिभिः । भूषणैर्वरताम्बूलैर्वासस्स्रग्गन्धधारिभिः ॥
तामन्वयुर्महादेवीं गणा नन्द्यादयस्तदा । प्रोत्सारितमहाकक्ष्या गणानां वेत्रधारिणाम्॥
विकिरन्ति महादेव्याः पुष्पाणि पुरतो गणाः । मृदङ्गमुरजापारशङ्खदुन्दुभिनिस्वनैः ॥
नृत्यन्ति रुद्रकन्याश्च देव्यास्तास्सन्निधौ मुदा । कैलासशिखरोद्दामप्रासादवरमौलिगाः
विकिरन्ति महादेवीं लाजैस्सुमनसां गणैः।जयेति प्रसभं वाचो मुमुचुस्ते गणोत्तमाः॥
तामालिङ्गय महादेवीमनुयातां मनोन्मनीम् । देवपार्श्वं द्रुतं गच्छेत्यशात्तां मेनयानुगा॥
विमानवरमारुह्य सिंहासनवराश्रिता । मेनया भूधरेशेन मैनाकेन सखीगणैः ॥ ६९ ॥
स्कन्देन गणपेनेशि नन्द्यादिगणपैस्तथा । जयेति पूजिता वाग्भिस्सन्तोषाकुलमानसा
रुद्राणीकरजोदारवीणाक्कणनसुन्दरैः । शिवनामामृतरसं पिबन्ती श्रोत्रसम्पदा ॥७१
नयनानन्ददं देवी पश्यन्ती स्वसखीजनैः । वीजिता व्यजनैश्चित्रैश्चामरैस्सखिभिस्तदा
पूजिता भक्ष्यभोज्यैश्च पेयैर्धूपैश्च धूपिता । मेनया विहरन्ती सा ययौ मन्दं हिमालयम्॥
पश्यंतीदिव्यसौधानांमालाःप्रोद्यत्पताकिकाः।कैलासलिङ्गधामानिप्रोद्यत्कुंभानिसाशिवा
ध्यायन्ती शिवपादाब्जविहाराहारचेष्टितम्। स्मरन्ती स्वचरित्राणि शिवस्य परमात्मनः
सर्वान् गणेन्द्रान्पितरं स्कन्दहेरम्बकावपि । निवेश्य बाह्यकक्ष्यायां विमानस्यार्करोचिषः
शिवनैवेद्यभक्ष्याद्यैरतर्पयत शङ्करी । स्रग्गन्धाभरणैरुच्चै रुद्राणीवरनर्तनैः ॥ ७७ ॥
समाययौ सा पितरं नगेन्द्रं पार्वती तदा । यावत्कैलासशिखरदर्शितानन्दितान्तरा ॥
अपक्ष्मपक्ष्मपातेन पश्यन्ती भर्तुरालयम् । प्रणम्य तद्विमानाग्रं देवदेवस्य शूलिनः॥७९

१. कश्चित्कक्ष्यादिकायुतः इति पाठः ।

तावद्ददर्श सा दूरात्केदारेशशिवालयम् । ज्वलत्कुम्भपताकाग्रवरगोपुरभूधरम् ॥ ८
तत्र प्रणम्य सा देवी दूरादैक्षद्धिमाचलम् । तदा हिमाचलेन्द्रेण पार्वतीया गणोत्तमाः
प्रेषितास्श्रीमहेशान्या सद्मालङ्कर्तुमुद्यताः । स्वमौलिमपिकेदारं रम्यचारुशिवालय
सिक्तागन्धांबुभिर्मार्गाःफलितास्तत्रतेनगाः।नगोर्ध्वशिखरोद्भासिफलपुष्पालिशो
दीपावलीविरचितरत्नतोरणपंक्तयः । प्रोद्यद्रम्भाफलभरपुष्पैश्चैवावलम्बिभिः ॥ ८
दवनामोदसन्दोहवातव्याप्तदिगन्तराः । द्वारेषु परिक्लृप्ताश्च मणिकुम्भास्सु पल्लवाः
रङ्गवल्लीविरचितास्स्वमौलिवरशृङ्गके । केदारेशालयं तस्य दिव्यधूपविराजितम्॥
प्रोद्यत्पताकाबहुलं बिल्वमन्दारपूजितम् । लिङ्गं तच्चन्दनालिप्तं फणीफणविभूषित
देवाङ्गनास्समायाताविष्णुब्रह्मादयस्सुराः । गन्धर्वा मुनयस्सिद्धाश्चारणाश्चाप्सरोग
स्तुवन्ति च महादेवीं नृत्यन्त्यप्सरसः पुरः । गायन्ति गीतं गन्धर्वा वेदाङ्गैपुर्मुनी
एवं नानाविधैर्घोषैर्युक्ता सा परमेश्वरी । स्वपितुश्चारुशिखरप्रासादवरमासदत् ॥
देवैस्स्तुता गणेन्द्रैश्च पित्रा मात्रानुमोदिता । तत्राविशत्पितुर्वेश्म विमानादवरुह्य
मात्रा दत्तकरा देवी दिव्यसिंहासनाश्रिता । विहाराहारशय्याभिः पूजिता परमेश्व
उवास हिमशैले सा स्वपितुर्भवने तदा । मणिदीपजपंक्तीभिस्तदा नीराजिताम्बि
वासोभीरत्नभूषैश्चगिरीं द्रेणार्चिताशिवा । विसृज्यस्कन्दहेरंबौनंदिकेशादिकान्गण
यातेत्यशाद्गणान्देवी कैलासंशङ्करालयम् । प्रणम्य तां महादेवीं स्कन्दनन्द्यादयो ग
ययुस्तदा ते कैलासं विमानेनार्करोचिषा । देवी सखीभिस्सहिता विजहार पितुर्गृहे
रम्यक्रीडाविनोदैश्च मात्रा पित्रा च पूजिता । गत्वा ते प्रमथाधीशा नत्वा देवं महेश्वर
व्यजिज्ञिपंस्ते वृत्तान्तं देव्यागमनसम्भ्रमम् । हिमाचलनिवेशश्च देवानां दर्शनं गणाः
शिवोवृत्तान्तमखिलंश्रुत्वादेवःपिनाकधृक् । विजहारसकैलासेचिन्तयन्त्सशिवागम
मनोन्मन्या महादेवः कैलासे वरसौधगः।चिक्रीड सरसालापविहारशयनासनैः॥१०

यस्त्वेमां महिमां नगोत्तमकथां श्रुत्वा महेशाश्रयां
देव्याश्चागमनं हिमाचलवरे कन्यापि विन्देत्सती ।

सौभाग्यं धनमक्षयं क्षितितले त्र्यक्षाङ्घ्रिपद्मार्चकः
कष्टैश्चापि विमुक्त एव सततं तुष्टस्सदा बन्धुभिः ॥ १०१ ॥
मोदत्येवसुपुत्रपौत्रविभवैरन्ते गणेन्द्रो भवेत् ॥ १०२ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे हिमाचलस्य देव्यागमनं नाम अष्टाविंशोऽध्यायः ॥ २८ ॥

---

## देवीं प्रति दूर्वासकृतमहिम्नस्स्तुतिर्नाम एकोनत्रिंशोऽध्यायः.

**गणाः—**

कथं देव्या महायोगी दूर्वासा स प्रसादभाक् । कथं तेन स्तुता देवी तत्स्कन्दवदनोऽधुना
तत्स्तुतिश्रवणादेव सर्वेषामघनाशनम् । तारकारे भवत्येव सर्वेषां शृण्वतां वद ॥ २ ॥

**स्कन्दः—**

कदाचित्सा महादेवी स्वपितुर्मौलिमीक्षती । गिरिवृक्षैस्सुमवृतैस्सरोवरमृगैर्युतैः ॥३॥
नानापक्षिरुतापारगायद्गन्धर्वकिन्नरैः । गिरौ शिखरिधाराभिरापगाभिरितस्ततः ॥४॥
मेनया विहरन्ती सा तस्यापश्यत चाश्रमम् । तपस्यद्भिर्मुनिवरैर्भस्मोद्धूलितविग्रहैः ॥५॥
धृतत्रिपुण्ड्ररुद्राक्षरुद्राध्यायजपादरैः । पञ्चाक्षरजपासक्तैः पञ्चास्यध्यानतत्परैः ॥ ६ ॥
रुद्रलिङ्गार्चकैर्भक्त्या बिल्वैः पुष्पैस्सदैव हि । केदारन्यस्तहृदयैर्दारादरविवर्जितैः ॥
ब्रसीकटनिविष्टैश्च तापसैरुपशोभितम् । ध्यायद्भिर्मनसा साम्बं केदारेशं तपस्विनः ॥८॥
फलमूलाम्बुपर्णाशाः पवनाशास्तथापरे । कटधूमाशनाः केचिन्नग्नाश्चैकवाससः ॥ ९ ॥
हृत्पुण्डरीके ध्यात्वैवं[1] पुण्डरीकाजिनाम्बराः । तत्रतस्मिन् श्रमैर्हीनेचाश्रमेविद्युदाकृतिम्
निरीक्ष्य देवीं दूर्वासास्स्वतपःफलमम्बिकाम् । एह्येहि मातरिति तां प्रणनाम तदा मुनिः
दिव्यासनं दिशत्तस्यै समेनायै मुनीश्वरः । विस्मितैर्मुनिसङ्घैश्च मधुपर्कैरपूजयत ॥१२॥
पुष्पैर्गन्धैस्तथा धूपैः फलमूलैर्महेश्वरीम् । प्रीतिदत्तं मुनीशेन देवी तच्चाग्रहीत्तदा ॥ १३
तेनस्तुता महादेवी सिद्धासनवराश्रिता ॥

---

१. ध्यात्वेशमिति पाठः ।

मुनिः—

धन्योऽहं पावनोऽहश्च त्वद्दर्शनमुमे मम । तपः फलश्च फलितं कालेनाद्य ममाम्बिके

त्वत्पादपङ्कजरजः प्राप्तये मत्तपः फलम् । किं मुक्त्या मम देवेशि यत्वं भक्तेष्टसिद्धि

पराशक्तिर्महामाया ब्रह्मादिजननी शिवा । महादेवमहादेवी हरवामार्द्धभामिनी॥१६

स्कन्दः—

तुष्टाव प्रवणो भूत्वा तां शिवां स मुनिस्तदा ॥ १७ ॥

दूर्वासाः—

श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहा-
सौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्वलम् ।
उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं ते वपु-
स्स्वान्ते मे स्फुरतु त्रिलोकनिलयं ज्योतिर्मयं वाङ्मयम् ॥ १८ ॥

आदिक्षान्तसमस्तवर्णसुमणिप्रोते वितानप्रभे
ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षोन्नते ।
ब्रह्माण्डाब्जवरासने जननि ते मूर्तिं भजे चिन्मयीं
सौषुम्नायतपीतपङ्कजमहामध्यत्रिकोणस्थिताम् ॥ १९ ॥

वन्देवाग्भवमैन्दवात्मसदृशं वेदादिविद्यागिरो
भाषा देशसमुद्भवा पशुगता छन्दांसि सप्तस्वरान् ।
तालान् पञ्च महाध्वनीन् प्रकटयत्यात्मप्रसारेण य-
त्तद्बीजं पदवाक्यमानजनकं श्रीमातृके ते परम् ॥ २० ॥

त्रैलोक्यस्फुटमन्त्रतन्त्र महिमां नाप्नोति शश्वद्विना
तद्बीजं व्यवहारजालमखिलं नास्त्येव मातस्तव ।
तज्जाप्यस्मरणप्रसक्तसुमतिस्सर्वज्ञतां प्राप्यक-
श्शब्दब्रह्मनिवासभूतवदनो नेन्द्रादिभिस्स्पर्धते ॥ २१ ॥

मात्रा यत्र विराजतेति विशदा तामष्टधा मातृकां
शक्तिं कुण्डलिनीं चतुर्विधतनुं यस्तत्वविन्मन्वते ।

१. महिमस्वात्मोक्तिरूपं विनायदिति पाठः ।

सोऽविद्याखिलजन्मकर्मदुरितारण्यप्रबोधाग्निना
भस्मीकृत्य विकल्पजालमखिलं मातः पदं तद्व्रजेत् ॥ २२ ॥
यत्ते मध्यमबीजमम्ब कलयाम्यादित्यवर्णं क्रिया-
ज्ञानेच्छादिमनन्तशक्तिविभवव्यक्तिं व्यनक्ति स्फुटम् ।
उत्पत्तिस्थितिकल्पकल्पिततनुं स्वात्मप्रसारेण य-
त्काम्यं ब्रह्महरीश्वरादिविबुधैः कामक्रियायोजितैः ॥ २३ ॥
कामं कारणतां गतानगणितान्कार्यैरनेकैर्महो-
मुख्यैस्सर्वमनोगतानधिगतान्मानैरनेकैस्स्फुटम् ।
कामक्रोधसुलोभमोहमदमात्सर्यादिषट्कश्च य-
द्बीजं भ्राजयति प्रणौमि तदहं ते साधु कामेश्वरि ॥ २४ ॥
यद्भक्ताखिलकामपूरणचणस्वात्मप्रभावं महा
जाड्यध्वान्तनिवारणैकतरणि ज्योतिर्विबोधप्रदम् ।
यद्वेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति
श्रीविद्ये तव सर्वराजवशकृत्तत्कामराजं भजे ॥ २५ ॥
यत्ते देवि तृतीयबीजमनलज्वालावलीसन्निभं
सर्वाधारतुरीयबीजपरमं ब्रह्माभिधाशब्दितम् ।
मूर्धन्यान्नविसर्गभूषितमहोङ्कारात्मकं तत्परं
संविद्रूपमनन्यतुल्यमहिमं स्वान्ते मम द्योतताम् ॥ २६ ॥
अगुप्ता गुप्तायास्स्वयमपि महान्तोऽपि लघव-
स्सकीला निष्कीला गुरुभिरुपदिष्टा अपि तव ।
प्रसन्नायां देवि त्वयि सकलमन्त्रार्थफलदा
तरोर्मूले सिक्ते विलसति खलु शाखाशततमी ॥ २७ ॥
सर्वं सर्वत एव सर्वविषये कार्येन्द्रियाण्यन्तरा
तत्तद्दिव्यहृषीककर्मभिरिदं सव्यस्तुवानापरा ।

१. तुरीयशक्तिपरममिति पाठः ।

वागर्थव्यवहारकारणतनुश्शक्तिर्जगद्व्यापिनी
यद्बीजात्मकतां गता तव शिवे तं नौमि बीजं परम् ॥ २८ ॥
अग्नीन्दुद्युमणिप्रभञ्जनधरानीरान्तरस्थायिनी
शक्तिर्ब्रह्महरीशवासवमुखामर्त्यासुरात्मस्थिता ।
[१]सृष्टस्थावरजङ्गमस्थितमहाचैतन्यरूपा च या
यद्बीजस्मरणेन सैव भवती प्रादुर्भवत्यम्बिके ॥ २९ ॥
स्वात्मश्रीविजिताजविष्णुमघवच्छ्रीपूरणैकव्रतं
तद्विद्याकवितावितानलहरीकल्लोलिनीदीपकम् ।
बीजं यत्त्रिगुणप्रवृत्तिजनकं ब्रह्मेति यद्योगिन-
श्शान्ता नित्यमुपासते तदिह ते चित्ते [२]दधे श्रीपरे ॥ ३० ॥
ब्रह्मायोनिरमासुरेश्वरसुहृल्लेखाभियुक्तैस्तथा
मार्ताण्डेन्दुमनोभवाभवसुधीमायाभीरुद्राश्रितैः ।
सोमाम्बुक्षितिशक्तिभिः प्रकटितैर्वर्णाङ्गवेदक्रमै-
र्वर्णैश्श्रीशिवदेशिकेन विदितां विद्यां तवाम्ब श्रये ॥ ३१ ॥
एकैकं तव मातृके परतरे संयोगि वा योगि वा
विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहम् ।
यन्निष्ठाश्रमहोत्पलासनमहाविष्णुप्रहर्तादयो
देवास्स्वेषु विधिष्वनन्यमहिमस्फूर्तिं दधे तेऽपि तत् ॥ ३२ ॥
इत्थं त्रीण्यपि मूलवाग्भवमहाश्रीकामराजस्फुर-
च्छक्त्याख्यानि चतुश्श्रुतिप्रकटितान्युत्कृष्टकूटानि ते ।
भूतर्तुश्रुतिसङ्ख्यवर्णविदितान्यारक्तकान्ते शिवे
यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकृत् ॥ ३३ ॥
नित्यं यस्तव मातृकाक्षरसखीं सौभाग्यविद्यां जपे-
त्सम्पूज्याक्षरचक्रराजनिलयां सायन्तनाग्निप्रभाम् ।

१. दृष्ट्वा स्थावर इति पाठः । २. दधत्येवतदिति पाठः ।

कामाख्यं शिवनामतत्वमुभयं व्याप्यात्मनां सर्वतो
दीव्यन्तीमिह तस्य सिद्धिरचिरात्स्याच्च स्वरूपैक्यता ॥ ३४ ॥
काव्यैर्वा पठितैः किमल्पविदुषो घोघुष्यमाणैः[1] पुनः
किन्तैर्व्याकरणैर्विबोधिततया किं वाभिधानश्रिया ।
एतैरम्बनवोभवीति सुकविस्तावत्तव श्रीमतो
यावन्नानुसरीसरीति सरणिं पादाब्जयोः पावनीम् ॥ ३५ ॥
गेहं नाकति गर्वितः प्रणमति स्त्रीसङ्गमो मोक्षति
द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति ।
मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवना-
त्त्वां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रियाम् ॥ ३६ ॥
आद्यैरग्निरवीन्दुबिम्बनिलयैरम्ब त्रिलिङ्गात्मभि-
र्मिश्रारक्तसितप्रभैरनुपमैर्युष्मत्पदैस्तैस्त्रिभिः ।
स्वात्मोत्पादितकाललोकनिगमावस्थामरादित्रयै-
रुद्भूतं त्रिपुरेति नाम कलयेद्यस्ते स धन्यो भवेत् ॥ ३७ ॥
आद्यो जाप्यतमार्थवाचकतया रूढस्स्वरः पञ्चम-
स्सर्वोत्कृष्टतमार्थवाचकतया वर्णः पवर्णात्मकः[2] ।
वक्त्रत्वेन महाविभूतिसरणिस्त्वाधारगोहृद्गतो
भ्रूमध्ये स्थित इत्यतः प्रणवतां ते गीयतेऽम्बागमैः ॥ ३८ ॥
गायत्री सशिरा तुरीयसहिता सन्ध्यात्रयी त्वागमै-
राख्याता त्रिपुरे त्वमेव महतां शर्मप्रदा कर्मणाम् ।
तत्तद्दर्शनमुख्यशक्तिरपि च त्वं कर्मब्रह्मेश्वरी
कर्ताहं पुरुषो हरिश्च सविता बुद्धश्शिवस्त्वं गुरुः ॥ ३९ ॥
अन्नप्राणमनःप्रबोधपरमानन्दैश्शिरःपक्षयु-
क्पुच्छात्मप्रकटैर्महोपनिषदां वाक्यैः प्रसिद्धीकृतैः ।

१. जोघुष्यमाणैरिति पाठः ।
२. पवर्गान्तकः इति पाठः ।

कोशैः पञ्चभिरेभिरम्ब भवतीमेतत्प्रलीनामिति
ज्योतिःप्रज्वलदुज्ज्वलात्मचपलां यो वेद स ब्रह्मवित् ॥ ४० ॥
सच्चित्तत्वमसीति वाक्यविदितैरध्यात्मविद्या शिवे
ब्रह्माख्यैरतुलप्रभावजनकैस्तत्वैस्त्रिभिस्सद्गुरोः ।
त्वद्रूपस्य मुखारविन्दकुहरात्सम्प्राप्य दीक्षामतो
यस्त्वां विन्दति तत्वतस्तदहमित्यार्ये स मुक्तो भवेत् ॥ ४१ ॥
सिद्धान्तैर्बहुभिः प्रमाणगणितैरन्यैरविद्यातमो-
नक्षत्रैरिव सर्वमन्धतमसं तावन्न निर्भिद्यते ।
यावत्ते सवितैव सम्मतमिदं नोदेति विश्वान्तरे
जन्तोर्जन्मनिवारणैकभिदुरं श्रीशाम्भवि श्रीशिवे ॥ ४२ ॥
आत्मासौ सकलेन्द्रियाश्रयमतो बुद्ध्यादिभिश्शोचितः
कर्माबद्धतनुर्जनिश्च मरणं प्राप्नोति यत्कारणात् ।
यत्ते देवि महाविलासलहरीविद्यायुधानां जय-
स्तस्मात्त्वां गुरुमभ्युपेत्य कलये त्वामेव चेन्मुच्यते ॥ ४३ ॥
नानायोनिसहस्रसम्भववशाज्जाता जनन्यः कति
प्रख्याता जनकाः कियन्त इति मे सत्स्यन्ति चाग्रे कति ।
एतेषां गणनैव नास्ति महतस्संसारवारान्निधे-
र्भीतं मां नितरामनन्यशरणं रक्षानुकम्पानिधे ॥ ४४ ॥
देहक्षोभकरैर्व्रतैर्बहुविधैर्ध्यानैश्च होमैर्जपै-
स्सन्तानैर्हयमेधमुख्यसुमखैर्नानाविधैः कर्मभिः ।
यत्सङ्कल्पविकल्पजालमलिनं प्राप्तं पदं तस्य ते
दूरादेव निवर्तते परतरं मातः पदन्निर्मलम् ॥ ४५ ॥
पञ्चाशन्निजदेहजाक्षरभवैर्नानाविधैर्धातुभि-
र्बह्वर्थैः पदवाक्यमानजनकैरर्थाविनाभावितैः ।

१. त्वदहमिति पाठः । २. मिलितमिति पाठः ।

साभिप्रायवदर्थकर्मफलदैः ख्यातैरनन्तैरिदं
विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे मातृके ॥ ४६ ॥

श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकं
विख्यातं तदधिष्ठिताक्षरशिवज्योतिर्मयं सर्वतः ।
एतन्मन्त्रमयात्मिकाभिररुणश्रीसुन्दरीभिर्वृते
मध्ये वैन्दवसिंह्मपीठललिते त्वं ब्रह्मविद्ये शिवे ॥ ४७ ॥

आताम्रार्कसहस्रदीप्तिसुषुमासौन्दर्यसारैरलं
लोकातीतमहोदयैरुपचितैस्सर्वोपमागोचरैः ।
नानारत्नविभूषणै रमणि तैर्जाज्वल्यमानाभित-
स्त्वं मातस्त्रिपुरारिसुन्दरि कुरु स्वान्ते निवासं मम ॥ ४८ ॥

विन्दुप्राणविसर्गजीवसहितं विन्दुत्रिजीवात्मकं
षट्कूटा विनिपर्ययया निगदिता तावत्त्रिवालावला ।
एभिस्सम्पुटितं प्रजप्य विहरेत्प्रासादमन्त्रं परं
गुह्याद्गुह्यतमं सयोगजनितं सद्भोगमोक्षप्रदम् ॥ ४९ ॥

शिञ्जन्नूपुरपादकङ्कणमहामुद्रासुलाक्षारसा-
लङ्कराङ्कितमङ्घ्रिपङ्कजयुगं श्रीपादुकालङ्कृतम् ।
उद्भास्वन्नखचन्द्रखण्डरुचिरं राजज्जपासन्निभं
ब्रह्मादित्रिदशासुरार्चितमिदं मूर्ध्नि स्मराम्यम्बिके ॥ ५० ॥

आरक्तच्छविनातिमार्दवयुजा निश्वासहार्येण य-
त्कौशेयेन विचित्ररत्नघटितैर्मुक्ताफलैरुज्वलैः ।
कूजत्काञ्चनकिङ्किणीभिरभितस्सन्नद्धकाञ्चीगुणै-
रादीप्तं सुनितम्बबिम्बमरुणं ते भावयाम्यम्बिके ॥ ५१ ॥

कस्तूरीघनसारकुङ्कुमरजोगन्धोत्कटैश्चन्दनै-
रादीप्तं मणिमालया विरचितग्रैवेयहारादिभिः ।

दीप्तं दिव्यविभूषणैर्जननि ते ज्योतिर्विभास्वत्कुच-
व्याजस्वर्णघटद्वयं हरिहरब्रह्मादिपीतं भजे ॥ ५२ ॥
मुक्तारत्नसुवर्णकान्तिललितास्ते बाहुवल्लीरहं
केयूरोत्तमबाहुदण्डवलयैर्हस्ताङ्गुलीभूषणैः ।
संवृत्ताः कलयामि हीरमणिमन्मुक्ताकलापीकृतं
ग्रीवापट्टविभूषणेन सुभगं कण्ठञ्च कम्बुश्रियम् ॥ ५३ ॥
उद्यत्पूर्णकलानिधीशवदनं भक्तप्रसन्नं सदा
सम्फुल्लाम्बुजपत्रकान्तिसुषुमाधिक्कारदक्षेक्षणम् ।
सानन्दं कृतमन्दहासमसकृत्प्रादुर्भवत्कौतुकं
कुन्दाकारसुदन्तपंक्तिरुचिरं पूर्णं स्मराम्यम्बिके ॥ ५४ ॥

तप्तस्वर्णकृतोरुकुण्डलयुगं माणिक्यमुक्तोल्लस-
द्धीराबद्धमनन्यतुल्यमपरं हैमञ्च चक्रद्वयम् ।
शुक्राकारनिकारदक्षममलं मुक्ताफलं सुन्दरं
बिभ्रत्कर्णयुगं भजामि ललितं नासाग्रभागं शिवे ॥ ५५ ॥

जातीचम्पककुन्दकेसरमहागन्धोत्किरत्केतकी-
नीपाशोकशिरीषमुख्यकुसुमप्रोत्तंसिता धूपिता ।
आनीलाञ्जननीलमत्तमधुपश्रेणी च वेणी तव
श्रीमातश्श्रयतां मदीयहृदयाम्भोजे सरोजालये ॥ ५६ ॥
लेखालभ्यविचित्ररत्नघटितं हैमं किरीटोत्तमं
मुक्ताकाञ्चनकिङ्किणीगणमहाहीरप्रबन्धोज्ज्वलम् ।
चञ्चच्चन्द्रकलाकलापललितं देवद्रुपुष्पार्चितं
माल्यैरेवविलम्बितं सुशिखरं बिभ्रच्छिरस्ते भजे ॥ ५७ ॥
मोक्षिप्तोच्चसुवर्णदण्डललितं पूर्णेन्दुबिम्बाकृतिं
चक्रं मौक्तिकरत्नचक्रकलितं क्षौमांशुकोत्तंसितम् ।

मुक्ताजालविलम्बितं सकलशं नानाप्रसूनार्चितं
चन्द्रोड्डामरचामरालिदधती श्रीदेवि ते स्वश्रियः ॥ ५८ ॥

विद्यामन्त्ररहस्यविन्मुनिगणैः कॢप्तोपचारार्चनां
देवादिस्तुतिगीयमानचरितां वेदान्दतत्वात्मिकाम् ।
सर्वास्ताश्च तुरीयतामुपगतास्त्वद्रश्मिदेव्यः परा-
स्तन्नित्यं समुपासते स्वविभवैश्श्रीचक्रनाथे शिवे ॥ ५९ ॥

शृङ्गारादिरसालयं त्रिभुवनं माल्यैरनेकैर्वृतं
सर्वाङ्गीणसदङ्गरागसुरभि श्रीमद्वपुर्धूपितम् ।
ताम्बूलारुणपल्लवाधरयुतं रम्यं त्रिपुण्ड्रं वह-
त्फालं नन्दनचन्दनेन सुरभि ध्यायामि ते मङ्गलम् ॥ ६० ॥

एवं यस्स्मरति प्रबुद्धसुमतिश्श्रीमत्स्वरूपं परं
वृद्धोप्याशु युवाभवत्यनुपमस्त्रीणामनङ्गायते ।
स्पष्टैश्वर्यतिरस्कृताखिलसुरश्रीजृम्भितात्मालयः
पृथ्वीपालकिरीटकोटिवलिभिर्नीराजिताङ्घ्रिर्भवेत् ॥ ६१ ॥

अथ तव धनुः पुण्ड्रेक्षुकृत्प्रसिद्धमणिद्युति
त्रिभुवनवधूमोहज्योत्स्नाकलानिधिमण्डलम् ।
अखिलजननि स्मारंस्मारं गतस्मरताञ्जन-
स्त्रिभुवनवधूमोहाम्बोधेः प्रपूर्णविधुर्भवेत् ॥ ६२ ॥

प्रसूनशरपञ्चकप्रकटगुम्फनागुम्फितं
त्रिलोकमवलोकयत्यमलचेतसां चञ्चलम् ।
अशेषरमणीजनस्मरविजृम्भणं यस्सदा
पटुर्भवति ते शिवे त्रिजगदङ्गनाक्षोभणे ॥ ६३ ॥

पाशं प्रपूरितमहासुमतिप्रकाशं यो वा तव त्रिपुरसुन्दरि सुन्दरीणाम् ।
आकर्षणेऽखिलवशीकरणे प्रवीणश्चित्तेवसन् स भुवनत्रयवश्यकृत्स्यात् ॥ ६४ ॥

यस्स्वान्ते कलयति कोविदस्त्रिलोकीस्तम्भारम्भणवेक्षणकृत्युदारवीर्यम् ।
मातस्ते विजयतां कुशं सयोषा देवास्तं भजति च भूभुजोऽत्र सैन्यम् ॥ ६५

पाशध्यानवशाद्भवेद्भवमहामोहाम्भसोज्जृम्भणं
प्रख्यातप्रव्यवेषु चिन्तनवशात्तत्तच्छरव्यं सुधीः ।
चापध्यानवशात्समस्तजगतां मृत्योर्वशत्वं महा-
दुर्गस्तम्भमहाङ्कुशस्य मननान्मायाममेयां तरेत् ॥ ६६ ॥

न्यासं कृत्वा गणेशं ग्रहगणमहायोगिनीराशिपीठैः
पञ्चाशन्मातृकार्णस्सहितबहुकलैरष्टवाग्देवताभिः ।
सश्रीकण्ठादियुग्मैर्निजविमलतनौ केशवाद्यैश्च तत्वै-
ष्षट्त्रिंशद्भिर्धराद्यैर्भगवति भवतीं यस्स्मरेत्स त्वमेव ॥ ६७ ॥

भगवति तव पादपद्मातिसद्मायिकश्रीस्त्रिजगति परिहृत्य भद्राय निद्रादिषु ।
अलि इति कलनादसङ्गीतभङ्गीकृते परिमलमिह किन्तु वन्देति सन्देहितः ॥ ६८
सुरपतिपुरलक्ष्मीजृम्भणातीतलक्ष्मीः प्रभवति निजगेहे यस्य देवत्वमार्ये ।
विधृतबहुकलानां पात्रभूतस्य तस्य त्रिभुवनविदिता सा जृम्भिता कीर्तिरच्छा ॥

मातस्त्वं भूर्भुवस्वर्महिततमतनुस्त्वन्तरिक्षं न सूर्यो
राज्ञी शुक्रेन्द्रवह्नीन्दुभिरपि निगमब्रह्मभिः प्रोतशक्तिः ।
प्राणापानादियुक्तैः कलयति सकलं मानसं ध्यानयोगा-
द्येषां तेषां सपर्या भवति सुरकृता ब्रह्मता योग्यता च ॥ ७० ॥

क मे बुद्धिर्वाचः परमविदुषो मन्दसरणिः
क ते मातर्ब्रह्मप्रमुखविबुधस्वान्तवचसाम् ।
अमूमा विष्फूर्तिः परतरमहिम्नस्तव नुतौ
प्रसीद क्षन्तव्यं बहुलतरचापल्यमपि मे ॥ ७१ ॥

प्रसीद परदेवते मम हृदि प्रभूतं भयं
निवारय दरिद्रतां दलय देहि सर्वज्ञताम् ।

१. मृत्युदारवीर्यमिति पाठः ।

विधेहि करुणानिधे शिरसि पादयुग्मं स्वकं
विदारय जरामृतिं त्रिपुरसुन्दरि श्रीशिवे ॥ ७२ ॥
इति त्रिपुरसुन्दरीस्तुतिमिमां पठेद्यस्सुधी-
स्स सर्वदुरिताटवीपटलचण्डदावानलः ।
लभेन्मनसि वाञ्छितं प्रचुरसिद्धिरिद्धिर्भवे-
दनेकविधसम्पदां पदमनन्यतुल्यो भवेत् ॥ ७३ ॥
सङ्गीतं सरसं कवित्वसरणिमाम्नायवाक्यस्मृती-
व्याख्यानं हृदि तावकीनचरणद्वन्द्वश्च सर्वज्ञताम् ।
श्रद्धां कर्मणि कालिके तव बलं श्रीजृम्भणं मन्दिरे
सौन्दर्यं वपुषि प्रकाशमतुलमम्बेश्वरि श्रीशिवे ॥ ७४ ॥
पृथ्वीपालप्रकटमकुटस्रग्रजोरञ्जिताङ्घ्रि-
र्विद्वत्पूजानतिमतिसमाराधितो बाधितारिः ।
विद्यास्सर्वाः कलयति हृदा भासयन्ति प्रभाभि-
र्लोकास्सर्वे नवनवपदैरिन्दुबिम्बप्रकाशैः ॥ ७५ ॥
भूष्यं वैदुष्यमुद्यद्दिनकरकिरणाकारमाकारतेजा-
स्सुज्ञानं भूरिमानं दिनकरललितं दुर्गमं योगमार्गम् ।
आयुष्यश्चाष्टसिद्धिं हरगिरिविशदां कीर्तिमभ्येत्यभूमौ
देहान्ते ब्रह्म पारं परमशिवचिदाकारमभ्येति विद्वान् ॥ ७६ ॥
उच्चेषु नीचेष्वपि दर्शनेषु प्रकाशते देवि तव स्वरूपम् ।
समुज्ज्वलन्त्येव हि यज्ञवाटे चण्डालवेश्मन्यपि जातवेदाः ॥ ७७ ॥

स्कन्दः—

दूर्वाससा महितदिव्यमुनीश्वरेण विद्याकलायुवतिमन्मथमूर्तिनैव ।
स्तोत्रं व्यधायि रुचिरं त्रिपुराम्बिकाया वेदाङ्गमौक्तिपटलैर्विदितैकमूर्तिः॥७८

१. प्राप्नोति विद्वत्कवीडिति पाठः ।

सदसदनुग्रहनिग्रहस्फीतनिजविग्रहो भगवान् ।
सर्वासामुपनिषदां दूर्वासा जयति देशिकः प्रथमः ॥ ७९ ॥

दूर्वासाः—

छत्रं चामरयोर्युगं व्यजनमादर्शं तथा मद्दलै-
भेरीशङ्खमृदङ्गकाहलकलं गीतं च नृत्यं तथा ।
साष्टाङ्गप्रणतिस्स्तुतिर्बहुविधा चैतत्समस्तं मया
सन्तुष्टेन समर्पितं तव शिवे सन्तुष्टये कल्प्यताम् ॥ ८० ॥

स्कन्दः—

इत्युक्त्वा स मुनिर्गिरीन्द्रतनया पादाब्जयोः प्रानम-
न्नेत्राब्जोत्थसरिज्झरीरसभरैरानन्दितस्वान्तरः ।
देवीं वीक्ष्य मुदा तदाह सुगिरो देहि प्रसीदेति तां
कैलासाचलमार्गपालिसरणिं शम्भोः कृपां केवलम् ॥ ८१ ॥

तत्स्तुतिं सा शिवा श्रुत्वा सन्तुष्टा मेनया सह । तमाह विनयान्नम्रं दूर्वाससमकल्मषम्॥

देवी—

महिम्नेन तवानेन तुष्टाहं त्वत्तपस्यया । वृणु कामान्यथेष्टं ते यावदिष्टं मुनेऽधुना ॥

स्कन्दः—

इत्थं देव्या वचश्श्रुत्वा सदूर्वासा महामुनिः । प्राञ्जलिः प्रार्थयामास प्रणम्य परमेश्वरीम्

दूर्वासाः—

भक्तिं त्वत्पदयोः पूजां कैलासे शिवदर्शनम्। कैलासगमनं देवि ममैवेष्टं सदाम्बिके॥८५
नान्यच्च कामयेऽहं वै कामारिपदपूजनात् । तेनैव सर्वकामानां प्राप्तिर्मेऽद्य महेश्वरि ॥
केदारेशं महालिङ्गं त्वत्पितुर्मौलिसंस्थितम् । तत्संसेकाय देवेशि ह्यानयाशु सरिद्वराम्॥

स्कन्दः—

इत्थंदूर्वाससोवाक्यं श्रुत्वासाजगदम्बिका । प्राहतंमुनिमीशानीयत्त्वयोक्तंतथाभवेत् ॥
तत्रैवगङ्गादेव्याच स्मृता [1]गोमौलितोनगात् । तस्यांसामेनयासस्नौदूर्वासामुनिभिस्सह॥

१. गां मौलितः इति पाठः ।

स्नात्वाभ्यर्च्य महालिङ्गं केदारेशं महेश्वरी। स्वपितुर्भवनं चागादनुगृह्य च तं मुनिम् ॥

मुनिर्नत्वा देवीं पशुपतिमपीशं त्रिजगतां
ययौ कैलासस्थं चिरतरदृशोर्दर्शनफलम् ।
स सम्प्राप्येशानं समकथयदीशाय हि तदा
महादेव्या दत्तं वरमपि मुदा तत्र विनतः ॥ ९१ ॥

सम्प्राप्य कैलासवरं मुनीन्द्रो नत्वा महेशं विवशो ननर्त ।
महेश विश्वेश प्रसीद शम्भो चेतीरयंस्तत्र मुनीन्द्रवर्यः ॥ ९२ ॥

देव्या तदा तं मुनिमीक्षिता सोऽनुग्राहितं प्राह शिवः कटाक्षैः ।
धन्यस्त्वमित्याह शिवोऽपि तं मुनिं कैलासमौलौ निवसेत्यशात्तदा॥ ९३ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे देवीं प्रति दूर्वासकृतमहिम्नस्स्तुतिर्नाम
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## जैगीषव्यस्कन्दसंवादो नाम त्रिंशोऽध्यायः.

जैगीषव्यः—

दूर्वाससस्तारकारे श्रुतमाख्यानमुत्तमम् । देवीप्रसादसम्पत्तिर्महिम्नस्स्तवकीर्तनम् ॥
कैलासदर्शनं तस्य शिवदर्शनमेव च । श्रुत्वा हृष्यामि मुनिभिस्सहैभिर्मुनिपुङ्गवैः ॥
किञ्चकार महादेवी हिमाद्रौ च पितुर्गृहे । कथं सा पूजिता तेन हिमशैलेन मेनया ॥
तदाचक्ष्व महाभाग श्रोतुं कौतूहलं हि मे ॥

सूतः—

जैगीषव्येनकथितं श्रुत्वावाक्यंहराङ्गजः। साधुसाध्वितितंचोक्त्वाकथयामास पूजनम्॥
देव्या हिमाद्रिशैले च केदारेशार्चनं द्विजाः । मेनया भूधरेन्द्रेण कृता चापचितिर्मुदा॥
देव्या तत्कथयामास जैगीषव्याय पृच्छते ॥ ६ ॥

स्कन्दः—

सा नित्यं गिरिजा तत्र गिरिराजेन पूजिता। उवास भवने तत्र पितुः परमहर्षिता ॥
आलीगणैः परिवृता दिव्यसिह्मासनस्थिता। मेनया पूजिता नित्यं विहारशयनासनैः
दिव्यमञ्चे सुधासौधे मणिपीठेऽधिशायिनी। पुष्पैर्गन्धैर्भक्ष्यभोज्यैः पेयवासोविभूषणैः
सखीभिस्सेविता देवी निनाय दिवसानृतून्। वसन्ते समनुप्राप्ते स्मरन्ती शङ्करं सदा॥
हिमाद्रिविपिने देवी कुसुमापचयादरा। नानाद्रुमलताः फुल्लास्सम्पश्यन्ती तदा द्विजाः
स्वपितुर्मौलिकासारनलिनानि प्रपश्यती। पुन्नागसरलान्कोविदारार्कांश्च मधूककान्॥
प्रफुल्लान्तसल्लकान्देवी पश्यन्तीनगमूर्धनि। अशोकशाखामालम्ब्य स्वकराग्रेण साशिवा
एकान्ते चिन्तयामास शिवपादसरोरुहम्। कैलासमौलिसौधेषु शिवेन हि समागमम्॥
उत्फुल्लनलिनीं दृष्ट्वा तत्तटस्था महेश्वरी। हंसयुग्मं तदा देवी दृष्ट्वा निश्वसती तदा॥
खिन्नाननाम्बुजादेवीहिमापायाब्जसन्निभा। उत्फुल्लानोकहांस्तत्रतन्मूलमणिकल्पिते
वेद्यामध्यासते देवी सखीभिर्मेनया तदा। चन्द्रचन्दनलिप्तापि धारासारगृहेष्वपि॥
फुल्लपुष्पाम्बुसारौघशीकरासारतर्पिता। वीजिताव्यजनैश्चित्रैस्सा तापं न जहौ तदा॥
दिव्यपुष्पफलं दृष्ट्वा शिवाय विनिवेद्य सा। सोपहारं प्रकुर्वन्ती मेनामालिङ्ग्य सा शिवा
विदूनमनसा देवी विरहात्परमेश्वरी। चन्द्रकस्तूरिकामोदं नाङ्गीचक्रेऽथ चन्दनम्॥
निशि चन्द्रोदये देवी हिमवन्मौलिसौधगा। सुधाधामकरासारैस्सन्तप्तहृदयाभवत्॥
जाजीकुन्दमहामल्लीकेतकोत्पलचम्पकान्। स्वपितुर्मौलिसंस्थान्त्सापश्यन्तीशङ्करंविना
निस्सारं मन्यते सर्वं पिता मात्रा प्रपूजिता। मन्दमन्दारसुभगवायुभिः परिशीलिता॥
खिन्नानना सा विरहैर्महेशस्य महेश्वरी। न तापमजहत्कापि धारासारगृहेष्वपि॥ २४॥
व्यजनैर्वीजिता देवी सखीभिश्चामरैरपि। पद्मान्यपि हिमासारं स्वपितुर्मौलिसंस्थिता॥
मणिसौधेषु दुर्गेषु फलान्यप्युपजिघ्रती। मेनया सान्त्विता देवी हृदयेन विदूयत॥
अञ्जनं रोचनागन्धं कस्तूरीकुङ्कुमं निशाम्। निर्बन्धेन तदा मातुर्भोज्यं पेयञ्च सा शिवा
शय्यां सुमैस्तदा क्लृप्तां दिव्यमञ्चेषु धूपिताम्। मणिदीपैश्च विविधैःकुम्भादर्शगृहेऽम्बिका
सुप्ताविनिद्रा सादेवी चिन्तयित्वा महेश्वरम्। प्रबुद्ध्यतिक्षणादेवी सखीभिस्सेवितापिच

ताम्बूलगन्धपुष्पाद्यैर्दिव्यभक्ष्यान्नराशिभिः। क्व शङ्करेतिच स्वप्ने पृच्छत्यभिनयेन सा ॥
कैलासमौलिसौधेषु [1]विहारनिहितादरात्। इत्यर्थोक्तिपरा देवी पश्यन्ती सा स्वमातरम्
हिमाद्रिं चिन्तयन्तीसा निद्रातन्द्रितलोचना। दिवाहिमाद्रिविपिने केकिकोकिलकूजनैः
परितप्स्यति सा बाला महेशविरहातुरा। मेनया कन्दुकक्रीडां कुर्वन्ती क्षणमम्बि का॥
हिमाद्रिमौलिपालीषु फलान्यप्युपभुञ्जती। तदीयवनवातोत्थैः पुष्पकेसररेणुभिः॥३४॥
भल्लैरिव स्वाङ्गसूतैरित्यमन्यत सा शिवा। कदाचिन्मेनया देवी मैनाकेन सखीगणैः॥
रत्नान्दोलमहाक्रीडां कुर्वती वृक्षलम्बितैः। हिमाचलमहासौधवरप्रासादभूमिषु ॥ ३६॥
हल्लीसलास्यमालीभिःकुर्वती सास्मरच्छिवम्।आदर्शमुखनिश्वासैर्मालिन्यमकरोच्छिवा
हिमवानपितां दृष्ट्वाविमनःक्रान्तमानसाम्। पुनः पूजासमारम्भैः पूजयामास पार्वतीम्॥
मेनया लालिता देवी दिव्यासनविहारकैः। जलक्रीडासमारम्भैर्धारासारगृहान्तरैः॥३९
स्वमौलिविपिनोत्कूलशाखिदर्शनकौतुकैः। मृगपक्षिगणानन्दैर्मयूरवरकेतनैः ॥ ४० ॥
सारङ्गवारणहरीन्हारीणां लोकनैश्शिवाम्। तोषयामास शैलेन्द्रो देवीं संवत्सराष्टकम् ॥
सा निनाय समा देवी स्वपितुर्मौलिसंस्थिता। तांद्रष्टुमागतास्सर्वास्तपस्विन्यस्सुराङ्गनाः
लक्ष्मीर्वाणी शची चैवस्वधास्वाहासुराङ्गनाः। अरुन्धत्यनसूया च गार्गी मैत्रायणी तथा
ताराश्च रोहिणी मुख्या लोपामुद्रा मनोरमा। गन्धर्व्यो नागकन्याश्च यक्षविद्याधराङ्गनाः
किन्नर्यो यातुधान्यश्च रम्भाद्याश्चाप्सरोवराः। देवीपादाम्बुजद्वन्द्वं वीक्षितुं ता हिमालयम्
समायाता विमानस्था नद्यस्तीर्थामहेश्वरीम्। वस्त्राभरणपुष्पाणि कुङ्कुमं चन्दनंनिशाम्
फलमूलोपायनञ्च ताभिर्दत्तमरोचयत्। मेनांतत्रोपविविशुस्समन्तात्ता वराङ्गनाः॥४७॥
गायन्ति गानं गन्धर्व्योनृत्यन्त्यप्सरसस्तदा। वीणातोद्यं वादयन्ति किन्नर्यस्स्वरमूर्छनैः
फलमूलैर्निशाभिश्चकुङ्कुमैर्वरचन्दनैः। पुष्पैस्समर्चयामासु र्धूपैर्दीपैस्सुराङ्गनाः॥ ४९ ॥
मुनिपत्न्यस्तया देव्या मेनयाच समन्विताः।लक्ष्मींवाणींशचीश्चैव तथान्यास्सुरयोषितः
तापसीषु तपश्चोचे कुशलं गिरिजा तदा। देवपत्नीषु देवानां कुशलं लोकवार्तया ॥५१॥
सा देवी मधुरालापैस्तास्सम्भाव्य यथाविधि। उवास नगहर्म्येषु तास्तदोचुस्सुराङ्गनाः

१. विहर त्वं सहादरादिति पाठः।

सुराङ्गनाः—

दयारसघने शिवे विकचपङ्कजास्येऽम्बिके
सुचंपकसरावलीमधुरगन्धजाजीसरैः ।
सुगुच्छवरमल्लिकाविधृतपाटलोशीरकै-
र्विराजितकपर्दके विलसदिन्दुकोटीरके ॥ ५३ ॥

नमत्सुरपदाम्बुजे भवहरे नमस्ते नमः ॥

मञ्जीरशिञ्जितरणन्मणिपादयुग्मकञ्जोपमानकरणायितलक्तकोद्यम् ।
पादद्वयं सुरगणोत्तममौलिकोटिघृष्टं सुसन्नखजिताम्बरकान्तिकान्तम् ॥ ५४ ॥
त्वामम्बचाम्बुरुहगर्भरसास्यनेत्रे लग्ना विलग्नहृदयास्सुतरां नमस्ते । ५५ ॥
जय देवि जगद्वन्द्ये प्रपन्नार्तिहरे शिवे । तव पादाम्बुजद्वन्द्वदर्शनं नः क्व वा भवेत् ॥
तवपादाम्बुजार्चातोधन्यामान्यास्सुरासुराः ।शिववामाङ्कभागस्थासदाकैलासवासिनी
तवपादप्रभाजालैर्धृतालोकत्रयावली । अद्य धन्यतरः कालोह्यद्य धन्ये विलोचने ॥५८॥
मुनिदेवाङ्गनास्सर्वा यत्तेदृष्टं पदद्वयम् । वेदैरपि ह्यविज्ञातं वेदान्तैरपि ते पदम् ॥ ५९ ॥
तवाद्य दर्शनं जातं सफला नो मनोरथाः ॥

स्कन्दः—

इति लक्ष्म्यादिकानाञ्च वचश्श्रुत्वा महेश्वरी । समीक्ष्य देव्यस्सर्वास्तादेवीप्राहतदारमाम्

देवी—

कच्चित्ते कुशलं पद्मे वाणीन्द्राणि स्वधे तव । अरुन्धत्यनसूयेऽद्यगार्गिमैत्रायणीमुद्रिके ॥
गन्धर्व्यश्चाद्य किन्नर्यो युक्ता वा पतयोऽद्यहि ॥ ६२ ॥

स्कन्दः—

इति देव्या वचश्श्रुत्वा विस्मितास्तास्सुराङ्गनाः । प्रोचुरञ्जलिबन्धेनदेवींभगवतींशिवाम्

देव्यः—

त्वयेति भावितानां हि कुशलं सर्वदा शिवे । तव दृष्टं पदाम्भोजं मङ्गलानाञ्च मङ्गले ॥

वयं धन्यतमा जातास्त्वदालोकनमात्रतः ॥

स्कन्दः—

देव्या ताः पूजिता देव्यो नत्वा देवीं ययुर्गृहान् । देवी सा स्वपितुर्मौलौ केदारेशंसमर्चयत्
पित्रा कल्पितसम्भारैः प्रदोषेषु महेश्वरी । मेनया स्वसखीभिश्च विगाह्य सरितां वराम् ॥
गङ्गाम्बुनिर्मलघटैः पञ्चामृतघटैश्शिवा । धृतत्रिपुण्ड्ररुद्राक्षा विल्वपुष्पैश्च पङ्कजैः ॥ ६७ ॥
चन्दनालेपनैर्वस्त्रैः फणीन्द्रवरगोलकैः । दिव्यैराभरणैर्धूपैर्मणिदीपैश्च शङ्करी ॥ ६८ ॥
शङ्करं पूजयामास केदारेशं महेश्वरम् । दिव्यान्नराशिभिर्देवी भक्ष्यभोज्यफलैरपि ॥ ६९ ॥
छत्रचामरपंक्तीभिर्मृदङ्गवरकाहलैः । शङ्खदुन्दुभिनिर्घोषैर्वेणुवीणारवैश्शिवा ॥ ७० ॥
सखीभिः कल्पितापारवरिवस्यादराशिवा । प्रदोषेषु विशेषेण प्रणामप्रक्रमैस्तदा ॥ ७१ ॥
पूजान्ते गिरिशं स्तोत्रैस्तुष्टावाष्टाकृतिंशिवम् । केदारेशं महादेवी समाकर्णयतस्तुतिम् ॥

इत्थं सा परमेश्वरी त्रिजगतामाधारभूतं हरं
केदारेशमुमा समर्चयदहो पुष्पैस्तु कालेऽद्रिजा ।
मोदापारमहोदधिप्रविलसन्मग्नान्तरायैर्विना
प्रालेयाचलमौलिशेखरमहालिङ्गश्च केदारकम् ॥ ७२ ॥
ब्रह्माद्यैर्हरिरुद्रशक्रविनुतं यक्षैर्मुनीन्द्रैरपि
वेदान्तैरपि सङ्घशश्श्रुतिगणैस्संसेवितं संस्तुतम् ।
एवं सा प्रनिनाय कालकलनाच्छ्रीकालकालार्चना-
द्देवी सा गिरिराजलोचनमहानन्दैकपारारसा ॥ ७४ ॥
मेनाया हृदयाब्जमध्यविलसत्पादाम्बुजा सा शिवा ॥ ७५ ॥

देवी—

सद्योजात महेश शङ्कर विभो खद्योतवत्त्वत्पुर-
स्स्थातुं न प्रभवो भवन्ति विबुधास्ते सोमसूर्या नलाः ।
विद्योतन्ति कथं सुविद्युत इमास्स्याद्दन्तिनद्योऽपिते
भीतास्सागरगा यमानिलमरुन्नाथानलाः पाहि माम् ॥ ७६ ॥

वामदेवमुनिदेवगणेन्द्रैर्वासुदेवनयनार्चितपाद ।
भूमिदेवनिकरैरभिपूज्य देवदेव दयया परिपाहि ॥ ७७ ॥

अघोर घोरभवसागरकर्णधार लीलाकृताङ्ग सुरहीर महेश धीर ।
मारमार करवीरसुमाद्यस्रग्धरामरवराधिप धीर ॥ ७८ ॥

ईशान संहनन भोगितकामिनीन प्रोद्यद्दिवाकरहुताशनशशीनयनाङ्गहीन ॥७९॥

नानाविधान जगदेकनिधान शम्भो मेनात्मजाविनुत वेदततिप्रधान ।
तत्पूरुषीपूर्णजगतामुदीति शम्भो पारुष्यहीनवचसाप्यधिवक्तृता ते ॥ ८० ॥
देवैश्च वेदविधिना पुरुषोत्तमेन स्कन्देन गौरिगणपेन च पूज्यपाद ॥

स्कन्दः—

एतत्तेऽभिहितो मया द्विजवर श्रोत्रे कृतार्थे तवा-
प्यंशोऽयं हि भवसुधारससमः किं वच्मि तत्ते मधु ।
श्रुत्वाप्येतदसारसंसृतिभरं त्यक्त्वा विमुक्तो भवे-
त्तस्मिञ्छम्भुकृपा भवत्यनुदिनं प्रान्ते गणेन्द्रो भवेत् ॥ ८१ ॥

कैलासाचलमौलिपालिषु चिरं रुद्रोभवेत्सत्तमो
विष्णुब्रह्ममरुद्गणेन्द्रविदिशां नाथेषु गान्धर्वके ।
भूलोकेऽखिलभोगिनाथनिलये कोटित्रयं सङ्ख्यया
देव्यै सारतरं शिवोऽवददिदं तल्लक्षमानं द्विजाः ॥ ८२ ॥
मार्कण्डेयदधीचिगौतममुखाश्शृण्वन्ति देवास्सदा ॥ ८३ ॥

अनन्तमहिमास्पदं शिवरहस्यरत्नाकरं
विहाय युवतीजनोन्मथितचित्तवित्तार्थिनः ।
भ्रमन्ति धनिनां गृहे विकृतदन्तकीशानना
विनाशसमयेऽप्यहो परिलुठन्ति कीनाशगाः ॥ ८४ ॥

निद्रातन्द्राहताङ्गा निशि कुणपसमाः प्रातरारभ्य काका-
ऽऽन्नोपायेन पिण्डैर्निजजठरदरीपूर्तये यान्ति मूढाः ।

नो कोऽपि क्षणमात्रचिन्तितशिवो न श्रूयते शाम्भवा-
त्संसारार्णवतारिणी शिवकथा तेषां गतिः का भवेत् ॥ ८५ ॥

प्रमथपतिपदाब्जध्यानहीना न मान्या-
स्सामान्याश्शिवमन्युदग्धवपुषस्त्याज्यान्त्यजाता इव ।
यज्वापि क्षितिपालसूनुरपि वा ह्याशाधिपो वा शुनः
पुच्छोदल्लघुमानसो लघुतरं तुच्छः कथं गण्यते ॥ ८६ ॥

इति श्रीशिवरहस्ये भवाख्ये द्वितीयांशे जैगीषव्यस्कन्दसंवादे
त्रिंशोऽध्यायः ॥ ३० ॥

---

इति श्रीशिवरहस्ये द्वितीयांशश्चस्समाप्तः ॥ २ ॥





PRINTED AT THE VANI NILAYAM PRESS, MADRAS.